आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १६० ।

सरस्वतीभूषणाङ्कितजवडेकरोपाह्ववामनशास्त्रिभिः कृता

# आधानपद्धतिः ।

मूल्यं रूपकत्रयं ( ३ ) ।

॥ ॐ ॥

वे० शा० सं० रा० सरस्वतीभूषणकिंजवडेकरोपाह्ववामन-

शास्त्रिभिः कृता

# आधानपद्धतिः ।

एतत्पुस्तकं

रावबहादूर इत्युपपदधारिभिः

गंगाधर बापूराव काळे जे. पी.

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् 'महादेव चिमणाजी आपटे'

इत्यभिधेयमहाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

द्वितीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८६९ ।

खिस्ताब्दाः १९४७ ।



मूल्यमेको रूपकश्चतुर्दशाऽऽणकाश्च ( १।१४ ) ।

## आधानपद्धतौ प्रकरणानि

## अर्पणपत्रिका ।

श्रीरामदीक्षितानां साहाय्याद्विरचिता मयाऽल्पधिया ।
आधानपद्धतिरियं भगवत्पादेऽर्पिता मुदेऽस्तु सताम् ॥ १ ॥
जानक्यां रामचन्द्रादधिगतजनुषो यस्य बन्धुर्वरीयान्
दत्तात्रेयाभिधेयः सकलनिगमवित्सोमयाजी सुशीलः ।
अन्यौ द्वौ शीलविद्याप्रमुखगुणरुचिरौ विष्णुगोविन्दसंज्ञौ
खापर्डे श्रीगणेशो विलसति च महानाश्रयो यस्य नित्यम् ॥ २ ॥
स्वाध्यायं केशवार्याग्निगुडकरगुरोर्धीमतः शब्दशास्त्रं
तन्त्रं वैयासिकं यो बुधकुलतिलकाच्छ्रीविरूपाक्षसूरेः ॥
मीमांसां वैद्यनाथाच्चिरतरमपठीद्रामतः श्रौतविद्यां
तेन श्रीवामनेन व्यरचि कृतिरियं क्षम्यतां विद्वरिष्ठैः ॥ ३ ॥

सरस्वतीभूषणकिंजवडेकरोपाह्ववामनशर्मा ।

## आधानपद्धतेः प्रस्तावना ।

### भूधरभूजानिर्विजयतेतराम् ।

प्रास्ताविकं किंचित् । पुरुषस्य बुद्धिपूर्वकारिणः श्रेय उपादित्सितम् । तच्च विशिष्टक्रियासाध्यम् । सा च क्रिया वैदिकी यज्ञरूपा विश्वस्याखिलस्योत्पादयित्री नान्या काचित्प्रमाणत्वाद्वेदस्य । कथं वेदस्य प्रामाण्यम् । अर्थप्रत्यायकत्वाद्बाधकप्रत्ययाभावाच्चेति । अत एव तद्विहिताऽपि यज्ञरूपा क्रिया श्रेयःसाधनमिति निश्चीयते । सा च यज्ञरूपा क्रिया वेदचतुष्टयसाध्या त्रयीसाध्या वा । चत्वारो वर्णा अप्यत्राधिकृताः । तत्राऽऽद्यास्त्रयः साक्षाच्चतुर्थस्तु शरणकरणदोहनादिद्वारा परम्परया । तत्रापि राजसूयादौ राज्ञः क्षत्रियस्यैवाधिकारः । बृहस्पतिसवादौ ब्राह्मणस्यैव । असोमयाजिनः क्षत्रियस्य नित्याग्निहोत्रं नास्त्येव । 'न राजन्यस्य जुहुयात्' ( आप० श्रौ० सू० ६ । १५ । १० ) इत्यापस्तम्बवचनात् । परं नैतावताऽऽहितानामग्नीनां त्यागो युक्तो गतश्रीत्वात् । तस्य गतश्रीत्वं च तैत्तिरीयसंहितायां समाम्नायते—'त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राजन्यः' ( तै० सं० २ । ५ । ४ ) । अतस्तस्याजस्रधारणं वैधमेव समापतितम् । नित्याग्निहोत्राभावेऽपि क्षत्रियस्य 'होमकाले गृहेभ्यो ब्राह्मणायान्नं प्रहिणुयात्तेनोऽस्यैवास्य हुतं भवति' ( आप० श्रौ० सू० ६ । ५ । ११ ) इति होमप्रत्याम्नायं सूत्रयामासाऽऽपस्तम्बः । तथा 'नित्यमग्न्युपस्थानं वाचयितव्यः' ( आप० श्रौ० सू० ६ । १४ । १२ ) इति सूत्रणात् । किंच 'यो वा सोमयाजी सत्यवादी तस्य जुहुयात्' ( आप० श्रौ० सू० ६ । १४ । १३ ) 'अथैतां दिशमग्नीन्नयन्ति यज्ञपात्राणि च' ( ४ । २ । १ ) इत्याश्वलायनसूत्राच्च क्षत्रियेणाऽऽहिताग्नयो न त्यक्तव्या इत्येव सिध्यति । तानग्नीञ्श्मशानं नीत्वा तैरेव तद्दाहः सूत्रितः । यथा भगवानाश्वलायनः—'तस्मिन्बर्हिरास्तीर्य कृष्णाजिनं चोत्तरलोम तस्मिन्प्रेतं संवेशयन्त्युत्तरेण गार्हपत्यं हृत्वाऽऽहवनीयमभिमुखशिरसम्' ( आश्व० गृ० सू० ४ । २ । १५ ) इति । तस्मादजस्रधारणमेवाग्नीनां क्षत्रियस्योक्तम् । वैश्यस्यापि वैश्यसव एवाधिकारो न बृहस्पतिसवादौ । रथकारस्याऽऽधानं 'वर्षा रथकारस्येति' (तै०ब्रा०आश्व०श्रौ०सू०५।३।१८) वचनेन प्राप्तम् । अतः सोऽधिकारीत्यन्यदेतत् । जातपुत्रकृष्णकेशपदाभ्यामवस्थाविशेषलक्षितोऽत्राधिकारी । वर्णत्रयाद्बहिर्भूतमाधानाधिकारिणं नानुमन्वते आश्वलायनकात्यायनापस्तम्बकल्पकाराः । सा च यज्ञाख्यैकविंशतिसंस्थास्वरूपा । तत्र प्रकृतिस्त्रिविधा । अग्निहोत्रं दर्शपूर्णमासावग्निष्टोम इति । अन्या विकृतिरूपा । सर्वा चेयमुभयरूपाऽग्निसाध्या । ते चाग्नय आधानसाध्याः । तच्चाऽऽधानं कल्पसाध्यम् । ते च कल्पाः कात्यायनाश्वलायनापस्तम्बप्रभृतिभिः कल्पिताः । ते च लोके प्रत्याम्नाय

प्रयोगशास्त्ररूपाः स्मर्यन्ते । तेऽनुष्ठानौपयिकतयाऽध्ययनविध्याक्षिप्तत्वात्सत्याम्ना-यमङ्गत्वं प्रतिपन्नाः । अतस्तदनुसारमाधिकृतैः पुरुषैरवश्यमनुष्ठेया सा यज्ञरूपा क्रिया । साऽभ्युदयनिःश्रेयसार्थिभिरनुष्ठेयेति सर्वेषां प्रवादः । वयं त्वाचक्ष्महे-कर्तव्यत्येवानुष्ठेया न तत्राभ्युदयनिःश्रेयसे उद्देशीकृत्य प्रवर्तितव्यमिति । स्वर्ग-मोक्षरूपाभ्युदयनिःश्रेयसे तु लभ्येते एवाऽऽनुषङ्गिकतया । तदुक्तं—'कार्य-मित्येव यत्कर्म नियतं क्रियतेऽर्जुन' (भ॰गी॰१८।९) । 'विहितत्वाच्चाऽऽश्रम-कर्मापि' (ब्र॰ सू॰ ३ । ४ । ३२) इति । सूत्रयांबभूव चात्रार्थे भगवा-नापस्तम्बः—

नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत् (आप॰ध॰सू॰१।७।१) ।
निष्फला ह्यभ्युदये भवन्ति (१।७।२) ।
तद्यथाऽऽम्रे फलार्थे निर्मिते छाया गन्ध इति अनूत्पद्यन्ते ।
एवं धर्ममपि चर्यमाणमर्था अनूत्पद्यन्ते (१।७।३) ।
नो चेदनूत्पद्यन्ते न धर्महानिर्भवति (१।७।४) इति ।

अर्थी समर्थो विद्वानत्र कर्मण्यधिकारी । सामर्थ्यं चात्र शास्त्रीयमेव । सप-त्नीक इत्यादि प्रथमाधाने सपत्नीकत्वस्याऽऽवश्यकता । कुत इति चेत्—'क्षौमे वसानौ जायापती अग्निमादधीयाताम्' (आप॰ श्रौ॰ सू॰ ५ । ४ । १०) इति । 'आधानं च भार्यासंयुक्तमितिवचनात्' (जै॰ सू॰६।८।१३) । यत्त्वपत्नीकस्य भीष्मस्याऽऽधानं पौराणिकवचांस्यन्यथा लापयद्भिरुच्यते तदुक्त-वचनविरोधादुपेक्ष्यम् । समादधुश्चात्र भट्टपादास्तन्त्रवार्तिके—(जै॰सू॰१।३।५) 'भीष्मश्च—

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ (मनु॰ ९ । १८२) ।

इत्येवं विचित्रवीर्यक्षेत्रजपुत्रलब्धपितृऋणत्वः केवलयज्ञार्थं पत्नीसंबन्ध आसी-दित्यर्थापत्त्याऽनुक्तमपि गम्यते ।

यो वा पिण्डः पितुः पाणौ विज्ञातेऽपि न दत्तवान् ।
शास्त्रार्थातिक्रमाद्भीतो यजेतैकाकयसौ कथम्' ॥ इति ।

अतः प्रथमाधाने सपत्नीकेन भवितव्यम् । मृतपत्नीकेनाप्येष्टव्यमाधानम् । 'अपत्नीकोऽप्यग्निमाहरेत्' इत्यैतरेयवचःश्रवणात् । 'यो वा कश्चिदविद्यमानायाम्' (आप॰ श्रौ॰ सू॰ १ । २० । १३) इति च । अत्र रुद्रदत्तः—'अवि-द्यमानायामनालम्भुकत्वनिमित्तेनासंनिहितायामभावे च तस्या इत्यर्थोऽविशेषात्' । वक्ष्यति च—'तेजआदि लुप्यते' इति । ननु पत्नीवदस्याग्निहोत्रं श्रुयते । युक्तो मे यज्ञमन्वासातै' (आप॰ श्रौ॰ सू॰ २ । ५ । १०)

इत्यादिना कर्मणः पत्नीवत्त्ववचनात्तदभावे कर्मैव न संवर्तेत । नैवम् । कर्म न संवर्तेतानङ्गत्वे । अङ्गत्वे तु संवृत्तं स्यात् । कुतः । यस्याग्निहोत्रं मे यज्ञमिति यजमानस्यैव स्वामित्वरूपापनात्न पत्न्याः । तथा व्रीहियवपश्वाज्यपयःकपाल-पत्नीसंबन्धानीति तस्याः प्रसिद्धाङ्गसमभिव्याहाराच्च । तथा कर्मचोदना अपि यजमानमेवाधिकुर्वन्ति न पत्नीम् । यथा 'वसन्ते ब्राह्मणोऽग्नीनादधीत' 'अग्निहोत्रं जुहुयात्,' 'दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः' इत्यादि । बहृचब्राह्मणे चोक्तं—'तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेदिति'। किंचोद्घाटितमे-तत्कल्पान्तरकारैः पत्न्यभावेऽप्यग्निसद्भावं वदद्भिः । भारद्वाजस्तावत्—'अथ यद्यपत्नीकः स्यादुभाभ्यां तस्य संस्कार औपासनाग्निहोत्राभ्यामिति'। तथा च तलवकारकल्पे जैमिनिः—'आहिताग्नेश्चेत्पूर्वं जाया म्रियेत तां निर्मन्थ्येन दहेत्संतपनेन वेति'। 'अथाऽऽहार्येणानाहिताग्निं पत्नीं च' इत्याश्वलायनः। किंचाऽऽचारोऽप्यत्र दृष्टः शिष्टतमानां कण्वविभाण्डकभीष्मप्रभृतीनाम् । किंच सहाधिकारेऽपि पत्न्या यजमानसाम्यं नास्त्येव । यथोक्तं मीमांसकैः—'यावदु-क्तमाशीर्ब्रह्मचर्यमतुल्यत्वात्' इति । तस्मात्सिद्धमभावेऽपि पत्न्या न कर्मणो निवृत्तिरिति । अत्र भीष्मग्रहणमसारम् । उक्ततन्त्रवार्तिकविरोधात् । एतावताऽस्य कर्मणो नित्यत्वं प्रतिष्ठापितं भवति ; अपत्नीकोऽप्यग्न्याधाने श्रुत्याऽधिक्रियते । ये त्वस्य कर्मणोऽनित्यतां ब्रुवन्ति त एतदवश्यं विभावयन्तु । हेत्वन्तरमप्यत्रोप-न्यस्यते । उपनयनादिवदावश्यकमाधानं पुरुषस्य । 'कृष्णकेशोऽग्नीनादधीत' इति श्रुतेः । स्मृतिष्वपि—'अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ' इत्येतेषामावश्यकेषु पुरुषसंस्कारेषु पाठात् । 'अवश्यं च ब्राह्मणोऽग्निमादधीत' इति वसिष्ठवच-नात् । भगवताऽऽपस्तम्बेनापि—'अशूद्राणामदुष्टकर्मणामुपायनं वेदाध्ययनम-ग्न्याधेयं फलवन्ति च कर्माणि' ( आप० धर्मसू० १ । १ । ५ ) इति । द्विजातीनां वर्णधर्मत्वेनानुक्रमणात् । मनुनाऽप्यनाहिताग्निता स्तैणमिति तद-क्रियायामुपपातकत्वेन स्मरणाच्च । तस्मात्सिद्धमग्न्याधेयमावश्यकमिति । नित्य-त्वात्पुरुषसंस्कारत्वादुपपातकत्वेन स्मरणात्त्रैणपरिहारकत्वाच्चेति । 'यस्य वेदश्च वेदी च' इति जागर्त्येव वचः । यो हि ब्राह्मणमात्मानं मनुते भवितव्यं तेन क्रियावता । सा च क्रिया यज्ञरूपेत्युक्तमाधानसाध्येत्यपि । अतोऽप्याधातव्या अग्नयः । उक्तं च याज्ञिकैः—'नाक्रियो ब्राह्मणो नासंस्कारो द्विजो नाविद्वा-न्विप्रो नैतैर्हीनः श्रोत्रियो नाश्रोत्रियस्य यज्ञो धर्मेण वेदानामेकैकां शाखामधीत्य श्रोत्रियो भवति । ते चान्यत्र गौणमधिकारं कर्मस्वभ्यनुजानते,।

'यस्याग्नो न क्रियते यस्य चाग्रं न दीयते न तद्भोक्तव्यम्' ( आप० २ । ६ । १४ ) । अस्मादपि वचनादाधातव्या अग्नयः । 'राजाऽपि संमनुते श्रोत्रियम्' 'अकरः श्रोत्रियः' (आप०ध०सू०२ । १० । १० ) इति शासनात् ।

अस्मादप्यवश्यमाधातव्या अग्नयः । न त्वेवानाहिताग्निः स्यात् । ‘विज्ञायते च देवानां वा एषोऽन्यतमो य आहिताग्निरित्यथ यदस्याग्निमुद्धरति सहस्रं तेन कामदुघोऽवरुन्धेऽथ यदग्निहोत्रं जुहोति सहस्रं तेनेत्यपरिमितमेवेदमुक्तं भवति’ ( २ । ७ । ३ ) इति बौधायनेन कण्ठरवेणोक्तत्वात् । ‘वसन्ते ब्राह्मणोऽग्नीनादधीत’ इति विधेः सत्त्वात् । ‘नानाहिताग्निर्म्रियेत’ इति शासनात् ‘यावज्जीवमग्निहोत्रं जुहोति’ इति वचनादप्याधातव्या अवश्यमग्नय इत्युक्तं भवति । ये त्वधिकारिणि सत्यपि जप्याद्यनुष्ठानान्मध्यगन्याधानाभावो न दोषायेत्याचक्षते तान्प्रत्याचक्ष्महे—न हि जप्यादिना गृहस्थस्य स्थितिर्युक्ता । आश्रमधर्मोऽयम् । यथाऽग्निहोत्राद्याश्रमधर्मो न तथेतरत् । न ह्याश्रमधर्मभूतमितरत्सर्वेषामविशेषेण स्मरणात् । अयं हि परमो धर्मो विशेषेण श्रूयते । गृहस्थाश्रमिभिर्ब्राह्मणैरेवायं नानुष्ठितः स्यात्तर्हि श्रुतिचोदितोऽप्ययं वैयर्थ्यमाप्नुयात् । अस्मिन्ननधिकृतास्तु भगवत्पूजायां तत्स्मरणे च प्रवर्तन्ताम् । न हि तत्र द्विजातीनां गृहस्थाश्रमिणां प्रवृत्तिः फलवतीति युक्तमुत्पश्यामः । न ह्यस्य कश्चित्प्रतिनिधिर्विद्यते । यत्र तु स्मर्यते पुराणश्रवणादावग्नि[ होत्र ]फलं तत्राप्यनधिकारिणामेव स्त्रीशूद्राणामग्निहोत्रफलं चाऽऽम्नात्यम् । अधिकारश्च नास्ति कथं फलवद्भिर्भवितव्यमित्याकाङ्क्षायां पुराणश्रवणादिभिस्तत्प्राप्यत इति समाधिः । संन्यासस्यापीयमेव गतिः । यत आहुर्भट्टपादास्तन्त्रवार्तिके—

तत्रैवं शक्यते वक्तुं येऽन्धपङ्ग्वादयो नराः ।
गृहस्थत्वं न शक्ष्यन्ति कर्तुं तेषामयं विधिः ॥
नैष्ठिकं ब्रह्मचर्यं वा परिव्राजकताऽपि वा ।
तैरवश्यं ग्रहीतव्या तेनादावेतदुच्यते ॥
यावदेकं श्रुतौ कर्म स्मृतौ वाऽन्यत्प्रतीयते ।
तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते ( जै० १ । ३ । ८ ) ।

व्रीहियवादिष्वपि तावत्प्रत्यक्षश्रुतिविहितेषु यदि कश्चिद्यावज्जीवमप्येकमेव पक्षमाश्रित्य व्यवहरेन्न स कदाचिदप्युपालम्भास्पदं गच्छेत् । यानि च प्रतिदिनं प्रयुज्यमानकर्मामयजुर्ब्राह्मणकल्पव्याख्यानादिब्रह्मयज्ञनिमित्तानि फलानि कृतभिकृतपुरुषेभ्योऽन्यानर्थस्य प्रसङ्गाद्व्यावृत्तानि जपध्यानमात्राधिकृतब्रह्मचारिपरिव्राजकविषयत्वेनावतिष्ठन्ते तान्यपि स्वाध्यायविज्ञानभूयस्त्वेन भूयिष्ठानि भविष्यन्तीति प्रतिवेदब्रह्मचर्योपदेश इत्यादि । हरदत्तोऽप्यत्र व्याचख्यौ—नित्ययज्ञक्रिया पुरुषस्य श्रेयोऽभिव्यनक्ति । तस्यैवाक्रिया प्रत्यवायं संपादयत्यृणश्रुतेः ।

योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥

स्वद्रव्याभावे द्रव्यैकसाध्येष्वेवाऽऽवश्यकेषु द्रव्यानुकल्पमाह संग्रहकारः—

चण्डालात्प्रतिगृह्णीयाद्यजेताऽऽवश्यकैर्मखैः।

बोधायनोऽपि—

तस्मात्कन्दैः फलैर्मूलैर्मधुनाऽथ रसेन वा।
नित्यं नित्यानि कुर्वीत न तु नित्यानि लोपयेत्॥

रत्नावल्याम्—

यो वैदिकमनादृत्य कर्म स्मार्तेतिहासकम्।
मोहात्समाचरेद्विप्रो न स पुण्येन युज्यते॥
प्रधानं वैदिकं कर्म गुणभूतं तथेतरत्।
गुणनिष्ठः प्रधानं तु हित्वा गच्छत्यधोगतिम्॥
पतिते निष्कृतिर्दृष्टा क्रियाहीने न निष्कृतिः।

तत्रैव—

तस्मात्सर्वप्रयत्नेन क्रियायुक्तो भवेन्नरः।
आदध्यान्निर्धनोऽप्यग्नीन्नित्यलोपभयाद्द्विजाः॥

अतोऽवश्यमाधातव्या अग्नयः। अन्यदपि बहुत्र प्रतिपादनीयं, परं मन्येऽलं स्यादेतावता विचारचातुरीचतुराणामिति दिक्। अक्रियायाश्च प्रायश्चित्तविधानात्। ये चान्य आश्रमा ऊर्ध्वरेतसां ते च नित्यश्रुतिविरोधादनधिकृतान्धपङ्ग्वादिविषयतया व्याख्येया इति। यज्ञकर्म प्रधानं तद्धि चोदनाभूतमिति जैमिनिना नवम उक्तत्वादप्यवश्यमाधतव्या अग्नयः। इतोऽप्याधातव्या एवाग्नयः। उक्तं च जैमिनिना—'ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात्'(पू० मी० ६।२।११) इति। अत्र पार्थसारथिमिश्राः—'सोमेन यजेत स्वाध्यायमधीयीत प्रजामुत्पादयेत्' इति श्रुतं सोमविद्याप्रजं किं नित्यमुतानित्यमिति संशयः। तत्र यावज्जीवादितुल्यनिर्देशाभावात्। ज्योतिष्टोमेन स्वर्गकामो यजेतेति फलश्रवणात्। वसन्ते वसन्ते ज्योतिषा यजेतेति चास्य कालविधिपरत्वादध्ययनप्रजयोस्तु विश्वजिद्वत्स्वर्गकल्पना सप्तमे ब्रह्मवर्चसकाम इत्येवमादीनां चोपनयनगतानां फलानामुपनयनस्याध्ययनाङ्गत्वेन स्वयं फलानपेक्षत्वादध्ययनफलत्वमेव न्याय्यम्। अतः फलकामाधिकारत्वमेवैषामिति प्राप्ते ब्रूमः—नित्यानीति। कुतः—

वीप्सायुक्तो वसन्तो हि निमित्तत्वेन गम्यते।
यावद्वसन्तं नियमः सोमस्यातोऽवगम्यते॥

यावद्वसन्तमभ्यासः कामस्यैवाथ नोद्यते ।
यजेतेति पदेनैवं प्राप्नोत्यभ्यासलक्षणा ॥

तस्माद्वसन्ते निमित्ते विधानादागत आगते वसन्ते नियमेन सोमः कर्तव्य इति नित्यः। अध्ययनमप्यश्रुतफलमक्षरग्रहणादिना क्रमेण धर्माधर्मावबोधफलकत्वात्तस्य चाऽऽवश्यकत्वादावश्यकम् । ब्रह्मवर्चसादिकं त्वध्ययनाङ्गभूतोपनयनाश्रितसप्तवर्षादिगुणफलत्वादध्ययनफलमनाशङ्क्यमेव । प्रजोत्पादनमप्यनृणत्वफलश्रवणादनुत्पाद्य तथा सुतानधो गच्छतीति प्रत्यवायस्मरणादावश्यकं तस्मान्नित्यमेव सोमविधायजम् । ऋणश्रुतिरपि सोमादीनामावश्यकत्वं दर्शयति । न च तत्र ब्राह्मणश्रवणात्तद्विषयमेवावश्यकत्वम् । विधिवाक्येषु विशेषाश्रवणाद्ब्राह्मणग्रहणस्योपलक्षणार्थत्वात् । अतस्त्रयाणामप्यावश्यकाः सोमादय इति नैतदधिकरणमन्यथवादिभिरन्यथयितुं युक्तम् । सोम आधानाधीनः । आधानं विद्वदधीनम् । तस्मादप्याधातव्या अग्नय इत्यविवादम् । 'यस्मिन्कस्मिंश्चिद्दतावादधीत' इत्यत्र भगवत आश्वलायनवचनादप्याधानस्याऽऽवश्यकतामुद्घोषयामः । सूत्रभाष्यम्— 'आपद्यपि मुमूर्षोः सर्वेष्वृतुष्वाधानं कर्तव्यं नैवानाहिताग्निर्म्रियेत' इति । इतोऽप्यधिकं कौण्डपाचार्यः स्वग्रन्थे श्रौतकर्मानुष्ठाननित्यतां वदति—

यागश्चेत्प्रतिबद्धः स्यादेकेनांशेन यज्वनः ।
ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ॥
यो वैश्यः स्याद्बहुवसुर्हीनक्रतुरसोमपः ।
कुटुम्बान्तस्य तद्द्रव्यमाहरेद्यज्ञसिद्धये ॥ [इति] ।

अग्न्याधेयम्—अग्नीनामाधेयम्—अग्न्याधेयम् । तत्कर्तव्यमिति । कृत्यल्युटो बहुलमिति भावे यत् । अग्निराधेयोऽस्मिन्कर्मणीति वा बहुव्रीहिः । सोऽयमाधानसंस्कारोऽग्नीनां वैदिकः । विशिष्टे काले विशिष्टे देशे विशिष्टपुरुषेण विशिष्टैर्मन्त्रैर्गार्हपत्याद्यग्न्युत्पत्त्यर्थं यदरण्युत्पादिताङ्गाराणां निधानं तदग्न्याधेयमित्युच्यते । तस्य चोत्पत्तिविधिरुभयत्र शतपथे तैत्तिरीये च । यथा—'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति । तैत्तिरीये—'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति । अन्यत्र उत्पत्तिविधेरयमर्थः—वसन्तकालब्राह्मणादिकर्तृविशेषविशिष्टाधानविधिः ।

## इदानीमनुष्ठानविचारः ।

चतुर्विधा ब्राह्मणाः—आर्चिकाः, याजुषाः, सामगाः, आथर्वणाः, इति । तत्र प्रायः सर्वाणि कर्माणि याजुर्वैदिकान्येव । कुतः । तत्रैव सर्वेषां श्रौतस्मार्तानां कर्मणामुत्पत्त्यादिविधीनां सत्त्वात् । यद्यपि ऋग्वेदे साम्न्यथर्वणे किमपि

विहितं श्रूयते तदङ्गमात्रम् । यथा हौत्रमृग्वेदे स्तोत्रं सामवेदे ब्रह्मत्वमाथर्वणे यथा वा बह्वृचब्राह्मणे उपांशुयाजस्यामावास्यायां विधानमित्युपवर्षः । तथाऽपि तत्र विकल्प एवाङ्गीकृतः । परमेतादृशप्रधानस्याल्पस्य विहितत्वादकिंचित्करं चैतद्विधानम् । अङ्गविधानार्थमेवेतरेषां त्रयाणां प्रवृत्तिः । प्रधानविधानार्थं चि राणत्वप्रवृत्तं यजुर्वेदमनुसरन्ति श्रुत्यादिवदृग्वेदप्रभृतयः । आश्वलायनेन सूचिता अपि पञ्च यज्ञा यजुर्वेदमूला एवेति नारायणप्रभृतयः प्रतिपन्ना इति सुविदितमेव सूत्रवृत्तिकृतप्रमाणाम् । तस्मादाधानप्रभृतिकर्मानुष्ठानार्थमितरैर्यजुर्वेद एव शरणीकरणीय इति नान्तरीयकतया समापतितम् । विद्यारण्या अप्याहुः— 'कर्मकाण्डविषये यजुर्वेदस्यैव प्रधानत्वाद्भित्तिस्थानीयो यजुर्वेदश्चित्रस्थानीयावितरौ' । स च द्विविधः शुक्लकृष्णाभ्याम् । तत्र क आश्रयितव्य इतरैरिति चिन्तायामन्यतराश्रयणेऽपि न दोषः । तथाऽप्याश्वलायनसूत्रं तैत्तिरीयैः संगच्छते । सांख्यायनसूत्रं च वाजसनेयिभिः । अतः शाकलशाखिभिराश्रयितव्या तैत्तिरीयशाखा । समाचारोऽप्येवमेव । तैत्तिरीयैर्हौत्ररूपाङ्गानुष्ठानार्थं शाकलशाखा शरणी क्रियते । शाकलैरप्याध्वर्यवाद्यनुष्ठानाय तैत्तिरीयशाखा शरणी क्रियते । सांख्यायनैराध्वर्यवार्थं वाजसनेयिशाखा शरणी क्रियते । वाजसनेयिभिरपि सांख्यायनशाखा शरणी क्रियत इति विद्वत्प्रथितचरम् ।

तत्र पुनः संशयः । कृष्णयजुषो बहूनि सूत्राणि । तत्रेतरैस्तन्मध्ये कतमद्ग्राह्यं भारद्वाजं मानवं सत्याषाढीयं बौधायनीयमापस्तम्बीयं वा । [illegible] निर्णयः । कतमदपि ग्राह्यम् । अपरं च मन्त्रास्पतायै ऋग्वेदिभिर्बौधायनमादृतम् । सत्याषाढीये तु मन्त्रबाहुल्यं तदपेक्षयाऽप्यापस्तम्बीये । श्रौते कर्मणि गुणोपसंहारे पटीयांसः किल भगवन्त आपस्तम्बीयचरणाः । स्मार्ते तु बौधायनः पटीयान् । श्रौते प्रायो यथाब्राह्मणं सूत्रयति बोधायनः । समीमांसं कात्यायन इति विशेषः । तत्रेदानीमाश्वलायनसूत्राध्यायिनामापस्तम्बसूत्रानुसारी वक्ष्यमाणाधानप्रयोगः । अन्यदपि त्किमपि ग्राह्यमिति प्रस्तुत इदमेव कुतो ग्राह्यं कुतोऽन्यन्न गृहीतमिति शुष्कः प्रवादः । अत्र भगवानापस्तम्बः समस्तलोकहितकाङ्क्षी विध्यर्थवादमन्त्रात्मकविविधवेदभागव्याकीर्णं विभक्तानेकशाखाध्यारूढं च विभज्य वैतानिकस्य कर्मणो याजुर्वेदिकं प्रयोगं व्याचिख्यासुरग्न्याधेयं व्याख्यास्याम इति चाऽऽधानप्रयोगं सूत्रयांबभूव । तत्राऽऽधाने त्रयः पक्षाः—सोमपूर्वं (सोमात्पूर्वं) इष्टिपूर्वं ( इष्टेः पूर्वं ) अग्निहोत्रपूर्वं ( अग्निहोत्रात्पूर्वं ) तत्रामावास्यायां कृतमाधानं तथा नक्षत्राधानं चाग्निहोत्रपूर्वं भवति । पूर्णिमायां कृतमाधानमिष्टिपूर्वम् । सोमपूर्वे तु आधानानन्तरं सोमसंकल्पादिकमेव । न दर्शपूर्णमासौ नाप्यग्निहोत्रमिति विशेषः ।

तथाऽपि निर्दिशति कपर्दिकारिका कंचन शोभनपथम्—

' त्रैविद्यात्मकं कर्म श्रौतं तदभिधीयते ।
श्रुतिस्मृत्यात्मकं चैव स्मार्तं चैव तदुच्यते ॥ १ ॥
यजुर्वेदस्य चाध्वर्युर्होता ऋक्शाखिनस्तथा ।
उद्गाता सामवेदी च श्रौतं कर्म त्रिधात्मकम् ॥ २ ॥
ऋक्शाखोक्तं च हौत्रं त्वाध्वर्यवं याजुषं स्मृतम् ।
आपस्तम्बेन कर्तव्यं सर्वं चाध्वर्युकर्म च ॥ ३ ॥
आपस्तम्बस्य चाभावे बौधायनमथापि वा ।
ऋक्शाखैस्तु सर्वैश्च ह्यापस्तम्बेन कारयेत् ॥ ४ ॥
अन्यथा तु न कर्तव्यं शाखाविच्छिन्नदर्शनात् ।

इति कपर्दिकारिका इति त्र्यम्बककृताधानप्रयोगे । वृत्तिः—अद्यैव सोमेन यक्ष्य इति संकल्प्य य आधानमिच्छेत्स आधानकालं नावेक्षेत सोमोपक्रमकालमेवाऽऽदधीतेत्यर्थः । तत्र वसन्तादयः काला अग्रे सूत्रे स्पष्टमुक्ताः—

तत्रैवमाधानानुष्ठानक्रमः—

अरणी आहरेत् । संभारान्संभरेत् । अग्न्यायतनानि कुर्यात् । केशश्मश्रु वापयेत् । ब्रह्मौदनिकमौपासनिकं निदध्यात् । तस्मिन्ब्रह्मौदनं पचेत् । समिध आदध्यात् । अग्निहोत्रं जुहुयात् । पूर्णाहुतिं जुहुयात् । तत आग्नेयमष्टाकपालं निर्वपेत् । तदहरेव तदहरादिसंवत्सरान्तानां कालानां कस्मिंश्चित्काले पवमानहवींषि निर्वपेत् । ततश्चान्यानि हवींषि । इत्यादिः ।

मीमांसकानां च याज्ञिकानां कल्पकाराणां च भूयान्मतभेदः । तत्रानुष्ठाने यावद्वचनोपलब्धि यथासूत्रम् । वचनाभावे विकल्पः । भाट्टदीपिकाकारप्रभृतयस्तु यथासूत्रमनुष्ठानं नानुमन्वते । पार्थसारथिमिश्रा अप्येवमेव । अन्ये तु याज्ञिकमतानुयायिनः सत्यपि मीमांसाविरोधे यथासूत्रमेवानुष्ठानं प्रतिजानते । वयं तु विकल्पमाचक्ष्महे । मीमांसकयाज्ञिकौ स्वतन्त्रमेव श्रुतिविहितानुष्ठानव्यवस्थार्थं प्रवृत्तौ । तत्र कः श्रेयानिति विप्रतिपत्तावभावपीतं ब्रूमहे । अत उभयोर्विमतस्थले विकल्पेनानुष्ठानमेव श्रेयः । गौणमुख्यान्यतरेणावश्यं भवितव्यमित्यन्यदेतत् । सत्यपि विकल्पे गौणमुख्यौ पक्षौ विचार्य मुख्यपक्षानुष्ठानमित्यत्र न केषांचिद्विमतम् । इदं तु—

विद्वन्मतमुपादाय मम त्वेतद्धृदि स्थितम् ।

तत्र काश्चिद्विप्रतिपत्तीः प्रदर्शयामः—

१ यस्य हविर्निरुप्तमित्यत्र मीमांसायां ' विनिरुप्तेन मुष्टीनाम् ' (६।५।५) इत्यत्राधिकरणे तस्मात्प्राकृतीभ्योऽपनीतो वैकृतीभिश्चासंयुक्तोऽवशिष्टो निर्वापस्तूष्णीं कर्तव्य इति मीमांसकाः प्रतिपन्नाः ।

याज्ञिकास्तु—पदार्थैकदेशस्याप्यार्थिकविधिविहितत्वमङ्गीकृत्य वैकृतीभ्य एवानुतिष्ठन्ति ।

२ अन्यत्र—‘ गुणलोपे च मुख्यस्य ’ (१०।२।२७)। इत्यत्र दर्शपूर्णमासयोः श्रूयते—‘ अग्निहोत्रहवण्या हवींषि निर्वपतीति श्रुतो निर्वापः पवमानेष्टिषु चोदकेन प्राप्तः कर्तव्यो न वेति संशये न कर्तव्यः। कस्मात् । अग्निहोत्रहवण्यभावात् । यदाऽग्निहोत्रं भवति साऽग्निहोत्रहवणी । न च पवमानेष्टिवेलायामग्निहोत्रं हुतं संभवति। विना वाऽग्निहोत्रहवण्या निर्वापो विगुणत्वादकर्तव्य इति प्राप्ते ब्रूमः। अतिदेशेन हि कार्यमुखेण पदार्थेषु प्राप्यमाणेषु हविःसंस्कारार्थतया निर्वापः प्राप्यते । तदङ्गभूताग्निहोत्रहवण्यसंभवान्न प्राप्यते । न चाप्राप्ताया गुणत्वमतस्तदभावेऽप्यविगुणत्वात्कर्तव्य एव निर्वापः । याज्ञिकास्तु—आधानाङ्गसंभाराहरणकाल एव पात्राणामुत्पादनाल्लाघवेन भाव्यग्निहोत्रहवण्यैव पवमानेष्टिषु निर्वापादिकं कुर्वन्ति । वयं त्वत्र विशेषं पश्यामः । ततस्तूष्णीमग्निहोत्रं जुहोतीति । आपस्तम्बसूत्रोक्तप्रथमपक्षे प्राक्पवमानेष्टिभ्योऽग्निहोत्रहवणी संपाद्यत एव । अपि वा द्वादशगृहीतेन स्रुचं पूरयित्वेति द्वितीयपक्षेऽयं परस्परविरोध इत्यवगन्तव्यम् । अथवा—नित्याग्निहोत्रे वेद्यभावेऽपि भगवताऽऽश्वलायनेन (२।३।२) इत्यत्र “ वेदिमतिव्रज्य” इत्युक्तम् । भाविनीं वेदिमाश्रित्य तत्र तत्र वेदिशब्दप्रयोगः। वेदिशब्देनात्र वेदिदेश उपलक्ष्यत इति हि याज्ञिकसंप्रदायः ।

३ तस्मादुत्तमथाऽनुयाजस्याऽऽयापिकस्विष्टकृद्देवतासंस्कारार्थत्वात् ।

यत्रैककपालमात्रहविष्केष्टौ, आवापिकस्विष्टकृल्लोपस्तत्रोत्तमानुयाजस्यापि लोपः। यत्र वा पित्र्यादावग्निः कव्यवाहनः स्विष्टकृद्देवता, आवापिकस्विष्टकृति तत्रोत्तमानुयाजेऽपि देवोऽग्निः कव्यवाहनः । स्विष्टकृत्सुद्रविणामिन्द्रः कविरित्यादिमन्त्र ऊहः । त्यागे च तद्देवतोल्लेखः । याज्ञिकास्त्वेवं न कुर्वन्ति (१०।४।२०) ।

४ येन कर्मणेर्त्सेत्तत्र जयाञ्जुहुयादितिवचनात् ।

ऋद्धिमिच्छता जयादयः कार्या इति कात्यायनापस्तम्बप्रभृतयः प्रतिपन्नाः सूत्रयांबभूवुश्च स्वस्वसूत्रे । जैमिनिस्तु—‘ होमास्तु व्यवतिष्ठेरन्नाहवनीयसंयोगात्’ ‘शेषश्च समाख्यानात् ’ (३।४।१३) । इत्याभ्यां सूत्राभ्यां जपहोमविधिर्वैदिकविषय एवेति ।‘यदाऽऽहवनीये जुहोति’ इति वचनाद्यत्राऽऽहवनीयस्तत्रैवेते होमा इति सिद्धान्तितवान्। याज्ञिकास्तु विनाऽप्याहवनीयं विवाहादावप्यभ्यनुजानन्ति, जयादीन्होमानिति। अध्वर्युवेदविहितत्वादध्वर्युणैव ते कर्तव्याः। न च विवाहादावध्वर्युरस्तीति । भगवताऽऽपस्तम्बेन तत्र तत्र बह्वृचब्राह्मणं वाजसनेयकमुदाह्रियते । यथा—कमण्डलुपद आदधीतेति बह्वृचब्राह्मणम् । हस्तेनोपवपतीति बह्वृचब्राह्मणम्(१।२०।१०)। वाजसनेयकमपि तथैव यथा—न संभारान्संभरे-

दिति वाजसनेयकम्। अजस्य पद आदधीतेति वाजसनेयकम्। अश्वस्य शो लोमानि वापयत इति वाजसनेयकम्। अप्यशमीगर्भस्येति वाजसनेयकम्। इत्यादि वचांसि प्रमाणभूतान्यादरार्थं स्वीकुर्वता भगवताऽऽपस्तम्बेन वाजसनेयकस्य स्वस्मात्पूर्वस्थितिः प्रदर्शिता। किं विशेषतः केषांचित्तैत्तिरीयवाक्याणां वाजसनेयक उपसंहारः कार्यो भवति। 'यथावचनं परम्' (३।३।४०)। 'प्रपिष्टानां पौष्णं चरुम्' इति वाजसनेयकवाक्ये 'पूषा प्रपिष्टभागः' इति तैत्तिरीयवाक्यस्यानुपसंहारे सति तद्विषयेयमधिकरणद्वयप्रवृत्तिरिति कुतूहलवृत्तौ। सत्युपसंहारे नाधिकरणद्वयप्रवृत्तिरिति मन्तव्यम्।

अथ च पुराणप्रोक्तेषु ब्राह्मणकल्पेष्विति पाणिनिसूत्रव्याख्यायां पण्डितश्रेष्ठैर्भट्टोजिदीक्षितैः पुराणेति किम्, याज्ञवल्क्यानि ब्राह्मणानीति प्रत्युदाहरणं दर्शितम्। ततो याज्ञवल्क्यब्राह्मणं शतपथाख्यं नवीनमिति व्यवहरन्तः केचित्संदृश्यन्ते। परं तदालम्बनभूतं श्रीभट्टोजिदीक्षितमतमेवासाधीयो निर्मूलं च। आपस्तम्बादिसूत्रेषु—इति वाजसनेयकमिति तत्र तत्रोदाहरणात्। तथा हि—महाभाष्ये भगवता पतञ्जलिना पुराणेत्यस्य प्रत्युदाहरणत्वेन शतपथब्राह्मणस्यानुल्लेखात्। शतपथवाक्यान्युपजीव्य प्रवृत्तानां बहूनां जैमिनिमीमांसाधिकरणानां दत्ततिलाञ्जलितापत्तेः। भगवतो जैमिनेस्तु प्राचीनत्वं सर्वविद्वत्संमतम्। अत एव शब्देन्दुशेखरे नागोजिभट्टैरेवमुल्लेखि—'याज्ञवल्क्यानीति'। कण्वादिभ्य इत्यण्। ते हि पाणिन्यपेक्षयाऽऽधुनिका इत्यभिमानः। भाष्ये तु शाट्यायनादितुल्यकालत्वाद्याज्ञवल्क्यादिभ्यः प्रतिषेधस्तद्विषयता च नेतिवचनमेवाऽऽरब्धम्। एतेनार्वाचीना वाजसनेयिन इति वदन्तः प्रत्याख्याता वेदितव्याः। यदि 'याज्ञवल्क्यानि ब्राह्मणानि' इति समाख्ययैतत्साध्यते तर्ह्यैतरेयब्राह्मणेऽपीयमेव गतिः स्यात्। भवतु को दोष इति चेदपौरुषेये वेदे प्राप्तस्य समाधानस्य विच्छिन्नपरम्परास्थितस्य सर्वथा लोपप्रसङ्गो वैदिकहानिश्च। अत एवार्थवादरूपाऽऽख्यायिका स्तुतिरूपा। भूतार्थवादत्वात्तेनैव तल्लब्धमित्यत्रैव प्रमाणं भवितुमर्हति। ये तु लोकहितार्थं प्रवृत्तास्तैरिदमवश्यं भट्टपादवचनं मननीयम्। शाक्यादिवचनानि तु कतिपयदमदानादिवचनवर्जं सर्वाण्येव समस्तचतुर्दशविद्यास्थानविरुद्धानि त्रयीमार्गव्युत्थितविरुद्धाचरणैश्च बुद्धादिभिः प्रणीतानि। त्रयीबाह्येभ्यश्चतुर्थवर्णनिरवसितप्रायेभ्यो व्यामूढेभ्यः समर्पितानि न वेदमूलत्वेन संभाव्यन्ते। स्वधर्मातिक्रमणं च येन क्षत्रियेण सता प्रवक्तृत्वप्रतिग्रहौ प्रतिपन्नौ स धर्ममविप्लुतमुपदेक्ष्यतीति कः समाश्वासः। उक्तं च—

परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत्।
आत्मानं योऽतिसंधत्ते सोऽन्यस्मै स्यात्कथं हितः॥

बुद्धादेः पुनरयमेव व्यतिक्रमोऽलंकारबुद्धौ स्थितः। येनैवमाह—

कलिकलुषकृतानि यानि लोके
मयि निपतन्तु विमुच्यतां तु लोकः ॥ इति।

स किल लोकहितार्थं क्षत्रियधर्ममतिक्रम्य ब्राह्मणवृत्तं प्रवक्तृत्वं प्रतिपद्य प्रतिषेधातिक्रमासमर्थैर्ब्राह्मणैरननुशिष्टं धर्मं बाह्यजनाननुशासद्धर्मपीडामप्यात्मनोऽङ्गीकृत्य परानुग्रहं कृतवान्, इत्येवंविधैरेव गुणैः स्तूयते। तदनुशिष्टानुसारिणश्च सर्व एव श्रुतिस्मृतिविहितधर्मातिक्रमेण व्यवहरन्तो विरुद्धाचारत्वेन ज्ञायन्ते।

तेन प्रत्यक्षया श्रुत्या विरोधे ग्रन्थकारिणाम् (पू० मी० १।३।४)।

तन्त्रवार्तिके-ग्रहीत्राचरितॄणां च ग्रन्थप्रामाण्यबाधनम्।

इदानीमपि राज्यादिलोभान्मध्ये मध्ये स्वधर्ममिति यत्किमप्युपदिशन्तः मत्याख्याता वेदितव्याः। नहि साम्राज्यलोभेनापि स्वधर्मातिक्रमणं सतां युक्तम्।

इतः परं पञ्चाग्निविचारः। तत्र सौत्री व्यवस्था यथा—वाजसनेयकाः पञ्चाग्नीन्स्वसूत्रानुसारमादधते। पञ्चाग्न्याधानं च युक्तमित्यनुवदति काठकोपनिषत्। भगवत्पादा अपि व्याचख्युस्तामेवोपनिषदम्—पञ्चाग्नयो गृहस्था इति। भगवानापस्तम्बोऽपि—'ततः सभ्यावसथ्यावादधाति लौकिकाग्निमाहृत्य मथित्वाऽऽहवनीयाद्वा यथर्त्वाधानेन (५।१७।१) इति। अत्र रुद्रदत्तोऽपि—नियमाधानं सभ्यावसथ्ययोः सूत्रकारमतात्। सत्याषाढसूत्रे तु—सत्याषाढमते सभ्यावसथ्ययोराधानं नित्यम्। एकेषां मते तयोः प्रतिषेध इति तेनैव सूत्रितम्—

'प्रतिषिद्धौ सभ्यावसथ्यावेकेषाम्' (३।४।१०) इति।

तस्माल्लोपः शाकल्यस्येतिवत्सत्याषाढसूत्रानुयायिनां विकल्पो युक्तः, न त्वापस्तम्बसूत्रानुयायिनाम्। तैस्तु तयोराधानमेष्टव्यमेव। बौधायनोऽपि सूत्रयांबभूव—

'अत्रैतावग्नी आदधाति सभ्यं चावसथीयं च' (२।१७) रुद्रदत्तोऽप्याह—'बौधायनश्चाऽऽह सभ्यावसथ्ययोः करण इति'। कुर्यादिति बौधायनः। न कुर्यादिति शालीकिः। आश्वलायनेन तु त्रयाणामेवेतिकर्तव्यताया उक्तत्वात्। तेत्रय एवाऽऽधातव्या इत्याचार्यमतम्। यथा—दक्षिणं त्वेव प्रथमं विज्ञायते पिता एषोऽग्नीनां यद्दक्षिणः पुत्रो गार्हपत्यः पौत्र आहवनीय इति।

भरद्वाजश्चाऽऽह—अथ सभ्यावसथ्यौ न शक्नुयाद्यो नित्यस्तस्मिन्प्रयोग इति। बौधायनस्त्वत्रानुग्रहमुक्तवान्। आहवनीये वा सभ्यावसथ्ययोः संकल्प इति। एतावता बौधायनसूत्राध्यायिभिरापस्तम्बसूत्राध्यायिभिश्चाग्नयः पञ्चाऽऽधातव्या

इति सूत्रसंमतम्। संप्रदायस्तु त्रय एवाऽऽधीयन्ते तत्तत्सूत्राध्यायिनः। आश्वलायनसू-
त्राध्यायिनां तु त्रय एव। सत्याषाढसूत्राध्यायिनां विकल्पः। कातीयैस्तु स्वसू-
नुसारं पञ्चाऽऽग्नय आधीयन्त एव। तत्सूत्रं तु—'सभ्यं च निर्मथ्य' (४।
२। २०) कात्यायनसूत्रे।

यत्त्वस्मिन्विषय आपस्तम्बसूत्रे (५। १७। १)। ततः सभ्यावसथ्यावित्यत्र
रुद्रदत्तोऽब्रवीत्। तस्माद्विकल्पो युक्त इति। तदुक्तसूत्रविरोधात्सुधीभिश्चि-
न्त्यम्। वयं त्वत्र ब्रूमहे—सभ्यावसथ्ययोः संकल्पो वाऽनुष्ठेय इत्यापत्पक्षः।
अन्यदपि तैत्तिरीयब्राह्मणे द्वौ पक्षौ श्रुतौ—त्रेधाधानपक्षः पञ्चधाधानपक्षः[च]।तत्र
पञ्चधाधानपक्षमेव भगवानापस्तम्बः सूत्रयामास। अतो विद्यारण्या अपि तैत्ति-
रीयब्राह्मणभाष्ये पक्षद्वयं समाविरे। वस्तुतस्तु त्रेधाधाननित्यस्यायमभिप्रायः—
गार्हपत्यादेवान्यत्र दक्षिणाग्न्याहवनीययोरिति। पञ्चाधानपक्षस्तु श्रौतोऽत एव—
अजस्रेत्यादिना सभ्यावसथ्याभिमन्त्रणमुक्तम्। समयेत्यादिना—उपस्थानं श्रुतम्।
सूत्रकारोऽप्यसूसुचत्। तस्माच्छ्रौतपक्षावलम्बनं युक्तमिति मादृग्जमाहे। अन्यच्च
विधिस्वरूपादर्थवादवाक्याद्गार्हपत्यादेव दक्षिणाग्निराधीयते। न च श्रौतैकपक्षम-
ङ्गीकृत्य लौकिकाग्निराधीयते, नं वा निर्मथ्य। तत्रापि श्रुतिसूत्रपक्षत्याग
इति विद्वदविगतम्। ये तु यथामीमांसासूत्रमनुतिष्ठन्ति न तान्प्रति कश्चन विवादः।
अन्यदपि यथाब्राह्मणमनुष्ठानं सुशकं स्यान्नाहि काः सूत्राणि यथाब्राह्मणक्रमम-
नुष्ठानं न सूत्रकारो वष्टि। अत एवानुष्ठानाय प्रयोगशास्त्रापरनामधेयस्य स्वस्वसूत्रस्य
यथामीमांसमुपयोग इति प्रतिजानीमहे। ब्राह्मणविस्तारार्थं शाखान्तरगुणोपसं-
हाराय कल्प आरब्ध आचार्येणेति वास्तवम्। अत्र विदुषां पूर्णाहुत्यन्तमेवाधान-
प्रयोगोऽलेखि। सूत्राणि त्विष्ट्यन्तानि। इष्टिप्रयोगोल्लेखनं तु प्रकृतिभूतदर्श-
पूर्णमाससूत्रप्रयोगादिलेखनं विनाऽनर्हमिति मत्वा पूर्णाहुत्यन्तमेवाधानमित्याश्वला-
यनसूत्रानुसारेणैवात्र प्रयोगः संगृहीत इत्यनवद्यम्। रामाण्डारभट्टोऽपि पूर्णा-
हुत्यन्तमिष्ट्यन्तमाधानं वेति। इष्ट्यन्तमेवाऽऽधानमिति नारायणपार्थसारथिमि-
श्रप्रभृतयः प्रतिपन्ना इति। तत्रेष्ट्यन्तमेवाऽऽधानमिति मीमांसकमतमनुसृत्यास्मा-
कमपि मतम्।

संप्रार्थ्यन्ते विद्वांसः करुणावरुणालया बुद्ध्या लिखितं मितंपचमतिना
तत्रावश्यमेव दोषाः संभवेयुस्तान्[illegible]अनुग्रहभाजनमात्मानं कर्तुमीहे
श्रीमद्भ्यस्तत्रभवद्भ्यः। अयमाधानप्रयोगः श्रौतस्मार्तसूत्रनदीष्णैः प्रमाणशा-

प्रमाणितमतिभिः किंजवडेकरश्रीवामनशास्त्रिभिस्तत्तत्सूत्रपर्यालोचनया सूत्रं तद-नुसारिप्रयोगः मन्त्रभाष्यसूत्रविषयिणी मीमांसा चेतिप्रक्रमेणाग्रथ्यत । मन्येऽहमे-केनानेन ग्रन्थेनाऽऽधानशास्त्रदिदृक्षवोऽल्पेनैवाऽऽयासेन कृतकार्या भविष्यन्ति । सूत्रादिबहुग्रन्थप्रामाणिकं ज्ञानमधिगमिष्यन्तीति तमेतामाशां सफलयेयुः सज्जना इति विश्वस्य विरमति–विद्वद्वशंवदः पाठकोपाह्वश्रीधरशर्मा ।

अयि भुवनभूषायमाणा महामहिमशालिनः पण्डितवरेण्याः परिनिष्ठितमतयो महदिदं प्रमोदास्पदं यन्मया निवेदनीयम्——अत्र किल पुण्यपत्तने अचिरादेव प्रवर्तितो ‘मीमांसामहाविद्यालयः’ सज्जनधुरीणैः खापर्डेकुलकमलदिवाकरैः श्रीकृष्णात्मजगणेशशर्मभी राजमन्त्रिभिः । ततः स पुण्यपत्तननिवासिभिर्बहु-भिर्महोदयैर्मिलित्वा प्रावर्धिषि भारतभाग्योदयात् । तदीयाध्यापकेन मया यथा-मति सर्वोपकाराय विद्यालयोद्देशकार्यनिर्वाहाय च ग्रथितोऽयं ग्रन्थः । यद्वि-षयकं प्रास्ताविके दक्षिणमहाविद्यालयस्थ (डेक्कनकॉलेजस्थ)सर्वविद्याविशारदैः पाठककुलावतंसैर्वेदशास्त्रोदधिपारंगतैः श्रीधरशर्मभिर्लिखितमेव । अतोऽत्र पुनस्तद्विषये लिखितुं न प्रयतामहे । अस्य ग्रन्थस्य ग्रथन एतद्विद्यालयस्थप्र-योगशास्त्राध्यापकैः सर्वयाजुषसूत्रपारंगतैर्वेदार्थविद्भिः सोमादिचयनाध्वरेष्वस-कृदनुष्ठिताध्वर्यवादिभिर्महदेव साहाय्यमनुष्ठितम् । मन्ये यदन्तरेण नैवान्तमया-स्यदयं ग्रन्थः । यदत्र ग्रन्थे स्खलनमनवधानादज्ञानाज्ज्ञानपरिपाकाभावात्तत्सुधी-भिर्यथावसरं ज्ञापयित्वाऽनुग्रहीतव्योऽयं जनः । विशेषतो याज्ञिकप्रवरैः श्रौति-प्रवरैरयं सूक्ष्ममतिं कृत्वाऽऽलोचनीय इत्यभ्यर्थ्य विरमामि । आशासे च सर्व-विद्यानामीशानाच्छ्रीविरूपाक्षकमलेश्वरकृपाकटाक्षादियं संस्था चिरंजीविनी भूयात् । प्रवर्तयेच्च विदुषो भूयो भूयः श्रौतमार्गानुसारिप्रबन्धानिर्माण इति शम् ॥

पुण्यपत्तनस्थमीमांसामहाविद्यालयाध्यापकः वामनशर्मा ।

---

ॐ तत्सद्ब्रह्मणे नमः ।

# आपस्तम्बीयश्रौताधानसूत्रम् ।

अग्न्याधेयं व्याख्यास्यामः ॥ १ ॥ यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा । तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सहेति शमीगर्भस्याश्वत्थस्यारणी आहरति ॥ २ ॥ अप्यशमीगर्भस्येति वाजसनेयकम् ॥ ३ ॥ अश्वत्थाद्धव्यवाहाद्धि जातामग्नेस्तनूं यज्ञियाꣳ संभरामि । शान्तयोनिꣳ शमीगर्भमग्नये प्रजनयितवे । आयुर्मयि धेह्या-युर्यजमान इत्यरणी अभिमन्त्र्य सप्त पार्थिवान्संभारानाहरति । एवं वानस्पत्या-न् । पञ्च पञ्च वा ॥ ४ ॥ भूयसो वा पार्थिवान् ॥ ५ ॥ न संभारान्संभरेदिति वाजसनेयकम् ॥ ६ ॥ वैश्वानरस्य रूपं पृथिव्यां परिस्रुता । स्योनमाविशन्तु न इति सिकताः । यदिदं दिवो यददः पृथिव्याः संजज्ञाने रोदसी संबभूवतुः । ऊषान्कृष्णमवतु कृष्णमूषा इहोभयोर्यज्ञियमागमिष्ठा इत्यूषान् । ऊतीः कुर्वाणो यत्पृथिवीमचरो गुहाकारमाखुरूपं प्रतीत्य । तत्ते न्यक्तमिह संभरन्तः शतं जी-वेम शरदः सवीरा इत्याखुकरीषम् । ऊर्जं पृथिव्या रसमाभरन्तः शतं जीवेम शरदः पुरूचीः । वम्रीभिरनुवित्तं गुहासु श्रोत्रं त उर्व्यबधिरा भवाम इति वल्मीकवपाम् । प्रजापतिसृष्टानां प्रजानां क्षुधोऽपहत्यै सुवितं नो अस्तु । उप-प्रभिन्नमिषमूर्जं प्रजाभ्यः सूदं गृहेभ्यो रसमाभरामीति सूदम् । यस्य रूपं बिभ्र-दिमामविन्दद्गुहा प्रविष्टाꣳ सरिरस्य मध्ये । तस्येदं विहतमाभरन्तोऽच्छम्बट्कार-मस्यां विधेमेति वराहविहतम् ॥ ७ ॥ इति प्रथमा कण्डिका ॥

याभिरदृꣳहज्जगतः प्रतिष्ठामुर्वीमिमां विश्वजनस्य भर्त्रीम् । ता नः शिवाः शर्कराः सन्तु सर्वा इति शर्कराः । अग्ने रेतश्चन्द्रꣳ हिरण्यमद्भ्यः संभूतममृतं प्रजासु । तत्संभरन्नुत्तरतो निधायातिप्रयच्छन्दुरितिं तरेयमिति हिरण्यम् ॥ १ ॥ इति पार्थिवाः ॥ २ ॥ यदि पञ्चौदुम्बराणि लोहशकलानि पञ्चमो भवति ॥ ३ ॥ अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठः संवत्सरं देवेभ्यो निलाय । तत्ते न्यक्तमिह संभरन्तः शतं जीवेम शरदः सवीरा इत्यश्वत्थम् । ऊर्जः पृथिव्या अभ्युत्थितोऽसि वनस्पते शतवल्शो विरोह । त्वया वयमिषमूर्जं मदन्तो राय-स्पोषेण समिषा मदेमेत्युदुम्बरम् । गायत्रिया ह्रियमाणस्य यत्ते पर्णमपतत्तृतीयस्यै दिवोऽधि । सोऽयं पर्णः सोमपर्णाद्धि जातस्ततो हरामि सोमपीथस्यावरुद्ध्यै । देवानां ब्रह्मवादं वदतां यदुपाशृणोः सुश्रवा वै श्रुतोऽसि । ततो मामाविशतु ब्रह्मवर्चसं तत्संभरꣳस्तदवरुन्धीय साक्षादित्येताभ्यां पर्णम् । यया ते सृष्टस्या-ग्नेर्हेतिमशमयत्प्रजापतिः । तामिमामप्रदाहाय शमीꣳ शान्त्यै हराम्यहमिति

शमीम् । यत्ते सृष्टस्य यतो विकङ्कतं भा आर्छज्जातवेदः । तया भासा संमित उरुं नो लोकमनुप्रभाहीति विकङ्कतम् । यत्ते तान्तस्य हृदयमाच्छिन्दज्जातवेदो मरुतोऽद्भिस्तमयित्वा । एतत्ते तदशनेः संभरामि सात्मा अग्ने सहृदयो भवेहेत्यशनिहतस्य वृक्षस्य । यत्पर्यपश्यत्सरिरस्य मध्य उर्वीमपश्यज्जगतः प्रतिष्ठाम् । तत्पुष्करस्याऽऽयतनाद्धि जातं पर्णं पृथिव्याः प्रथनं हरामीति पुष्करपर्णम् । इति वानस्पत्याः ॥ ४ ॥ इति द्वितीया कण्डिका ॥

यं त्वा समभरं जातवेदो यथाशरीरं भूतेषु न्यक्तम् । स संभृतः सीद शिवः प्रजाभ्य उरुं नो लोकमनुनेषि विद्वानिति संभृत्य निदधाति ॥ १ ॥ अथ नक्षत्राणि ॥ २ ॥ कृत्तिकासु ब्राह्मण आदधीत मुख्यो ब्रह्मवर्चसी भवति ॥ ३ ॥ गृहांस्तस्याग्निर्दाहुको भवति ॥ ४ ॥ रोहिण्यामाधाय सर्वान्रोहान्रोहति ॥ ५ ॥ मृगशीर्षे ब्रह्मवर्चसकामो यज्ञकामो वा ॥ ६ ॥ यः पुरा भद्रः सन्पापीयान्स्यात्पुनर्वस्वोः ॥ ७ ॥ पूर्वयोः फल्गुन्योर्यः कामयेत दानकामा मे प्रजाः स्युरिति ॥ ८ ॥ उत्तरयोर्यः कामयेत भगवन्त्स्यामिति ॥ ९ ॥ एतदेवैके विपरीतम् ॥ १० ॥ अथापरम् । पूर्वयोराधाय पापीयान्भवत्युत्तरयोर्वसीयान् ॥ ११ ॥ हस्ते यः कामयेत प्र मे दीयेतेति ॥ १२ ॥ चित्रायां राजन्यो भ्रातृव्यवान्वा ॥ १३ ॥ विशाखयोः प्रजाकामोऽनुराधेष्वृद्धिकामः श्रवणे पुष्टिकाम उत्तरेषु प्रोष्ठपदेषु प्रतिष्ठाकामः ॥ १४ ॥ सर्वाणि नित्यवदेके समामनन्ति ॥ १५ ॥ फल्गुनीपूर्णमास आदधीतेत्युक्त्वाऽऽह यत्फल्गुनीपूर्णमास आदध्यात्संवत्सरस्यैनमासन्दध्याद्द्व्यहे पुरैकाहे वा ॥ १६ ॥ अमावास्यायां पौर्णमास्यां वाऽऽधेयः ॥ १७ ॥ वसन्तो ब्राह्मणस्य ग्रीष्मो राजन्यस्य हेमन्तो वा शरद्वैश्यस्य वर्षा रथकारस्य ॥ १८ ॥ ये त्रयाणां वर्णानामेतत्कर्म कुर्युस्तेषामेष कालः ॥ १९ ॥ शिशिरः सार्ववर्णिकः ॥ २० ॥ सोमेन यक्ष्यमाणो नर्तुं सूर्क्षेन्न नक्षत्रम् ॥ २१ ॥ उदवसाय शालीन आदधीतानुदवसाय यायावरः ॥ २२ ॥ एकाहं वा प्रयायात् ॥ २३ ॥ इति तृतीया कण्डिका ॥

उद्धन्यमानमस्या अमेध्यमप पाप्मानं यजमानस्य हन्तु । शिवा नः सन्तु प्रदिशश्चतस्रः शं नो माता पृथिवी तोकसातेति प्राचीनप्रवणं देवयजनमुद्धत्य शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु न इत्यद्भिरवोक्ष्य तस्मिन्नुदीचीनवंशं शरणं करोति ॥ १ ॥ तस्याग्रेण मध्यमं वंशं गार्हपत्यायतनं भवति ॥ २ ॥ तस्मात्प्राचीनमष्टासु प्रक्रमेषु ब्राह्मणस्याऽऽहवनीयायतनम् । एकादशसु राजन्यस्य । द्वादशसु वैश्यस्य ॥ ३ ॥ चतुर्विंशत्यामपरिमितं यावता वा चक्षुषा मन्यते तस्मान्नातिदूरमाधेय इति सर्वेषामविशेषेण श्रूयते ॥ ४ ॥

दक्षिणतः पुरस्ताद्द्वितृतीयदेशे गार्हपत्यस्य नेदीयसि दक्षिणाग्नेरायतनम् ॥ ५ ॥ अन्यदाहवनीयागारमन्यद्गार्हपत्यस्य ॥ ६ । अग्रेणाऽऽहवनीयं सभायां सभ्यः ॥ ७ ॥ तं पूर्वेणाऽऽवसथ आवसथ्यः ॥ ८ ॥ केशश्मश्रु वपते नखानि निकृन्तते स्नाति । एवं पत्नी केशवर्जम् ॥ ९ ॥ क्षौमे वसानौ जायापती अग्निमादधीयाताम् ॥ १० ॥ ते दक्षिणाकालेऽध्वर्यवे दत्तः ॥ ११ ॥ अपराह्णेऽधिवृक्षसूर्ये वौपासनादग्निमाहृत्यापरेण गार्हपत्यायतनं ब्राह्मौदनिकमादधाति ॥ १२ ॥ औपासनं वा सर्वम् ॥ १३ ॥ निर्मथ्यं वा ॥ १४ ॥ यदि सर्वमौपासनमाहरेदपूपं यवमयं व्रीहिमयं चौदुम्बरपर्णाभ्यां संगृह्याऽऽयतन उपास्येद्यवमयं पश्चाद्व्रीहिमयं पुरस्तात्तस्मिन्नादध्यात् ॥ १५ ॥ सर्वमप्यौपासनमाहरन्नापूपावुपास्येदित्यपरम् ॥ १६ ॥ इति चतुर्थी कण्डिका ॥

## इति प्रथमः पटलः ॥१॥

अपरेण ब्राह्मौदनिकं लोहिते चर्मण्यानडुहे प्राचीनग्रीव उत्तरलोम्नि प्राजके वा निशायां ब्रह्मौदनं चतुःशरावं निर्वपति ॥ १ ॥ देवस्य त्वेत्यनुद्रुत्य ब्रह्मणे प्राणाय जुष्टं निर्वपामीति प्रथममपानायेति द्वितीयं व्यानायेति तृतीयं ब्रह्मणे जुष्टमिति चतुर्थम् ॥ २ ॥ तूष्णीं वा सर्वाणि ॥ ३ ॥ चतुर्षूदपात्रेषु पचति ॥ ४ ॥ न प्रक्षालयति न प्रस्रावयति ॥ ५ ॥ क्षीरे भवतीत्येके ॥ ६ ॥ जीवतण्डुलमिव श्रपयतीति विज्ञायते ॥ ७ ॥ दर्व्या ब्रह्मौदनमुद्धृत्य प्र वेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो अस्त्वव देवान्यजेहेड्यानिति जुहोत्यभि वा मन्त्रयते ॥ ८ ॥ चतुर्धा ब्रह्मौदनं व्युद्धृत्य प्रभूतेन सर्पिषोपसिच्य कर्षन्ननुच्छिंश्चतुर्भ्य आर्षेयेभ्य ऋत्विग्भ्य उपोहति ॥ ९ ॥ अपात्ताः प्रथमे पिण्डा भवन्त्यप्रतिहताः पाणयः । अथ ब्रह्मौदनशेषं संकृष्य तस्मिन्नाज्यशेषमानीय तस्मिंश्चित्रियस्याश्वत्थस्य तिस्रः समिध आर्द्राः सपलाशाः प्रादेशमात्र्यः स्तिभिगवत्यो विवर्तयति ॥ १० ॥ इति पञ्चमी कण्डिका ॥

चित्रियादश्वत्थात्संभृता बृहत्यः शरीरमभिसंस्कृताः स्थ । प्रजापतिना यज्ञमुखेन संमितास्तिस्रस्त्रिवृद्भिर्मिथुनाः प्रजात्या इति ॥ १ ॥ अथाऽऽदधाति घृतवतीभिराग्नेयीभिर्गायत्रीभिर्ब्राह्मणस्य त्रिष्टुब्भी राजन्यस्य जगतीभिर्वैश्यस्य ॥ २ ॥ समिधाऽग्निं दुवस्यतेत्येषा । उप त्वाऽग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम । तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्येति ब्राह्मणस्य । समिध्यमानः प्रथमो नु धर्मः समक्तुभिरज्यते विश्ववारः । शोचिष्केशो घृतनिर्णिक्पावकः सुयज्ञो अग्निर्यजथाय देवान् । घृतप्रतीको घृतयोनिरग्निर्घृतैः समिद्धो घृतमस्यान्नम् । घृतप्रुषस्त्वा सरितो वहन्ति

घृतं पिबन्सुयजा यक्षि देवान् । आयुर्दा अग्न इति राजन्यस्य । त्वामग्ने समिधानं यविष्ठ देवा दूतं चक्रिरे हव्यवाहम् । उरुज्रयसं घृतयोनिमाहुतं त्वेषं चक्षुर्दधिरे चोदयन्वति । त्वामग्ने प्रदिव आहुतं घृतेन सुम्नाय वः सुषमिधा समीधिरे । स वावृधान ओषधीभिरुक्षित उरु ज्रयांसि पार्थिवा वितिष्ठसे । घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं न समिधान ऋञ्जते । इन्धानो अक्रो विदथेषु दीद्यच्छुक्रवर्णा-मुदु नो यंसते धियमिति वैश्यस्य ॥ ३ ॥ इति षष्ठी कण्डिका ॥

समित्सु तिस्रो वत्सतरीर्ददाति ॥ १ ॥ प्राश्नन्ति ब्राह्मणा ओदनम् ॥ २ ॥ प्राशितवद्भ्यः समानं वरं ददाति ॥ ३ ॥ यस्मिन्नक्षत्रेऽग्निमाधास्यन्स्यात्तस्मि-न्संवत्सरे पुरस्तादेताः समिध आदध्याद्द्वादशाहे द्व्यहे त्र्यह एकाहे वा ॥ ४ ॥ आधेयास्त्वेवाग्निमादधानेन ॥ ५ ॥ अथ व्रतं चरति न मांसमश्नाति न स्त्रियमुपैति नास्याग्निं गृहाद्धरन्ति नान्यत आहरन्ति ॥ ६ ॥ ब्राह्मौदनिकेन संवत्सरमासीत ॥ ७ ॥ औपासनश्चेदाहित एतस्मिन्नस्याग्निकर्माणि क्रियन्ते ॥ ८ ॥ न प्रयायात् ॥ ९ ॥ नानुगच्छेत् ॥ १० ॥ यदि प्रयायादनु वा गच्छेद्ब्रह्मौदनं पक्त्वैतयैवाऽऽवृता समिध आदध्यात् ॥ ११ ॥ यद्येनं संवत्सरेऽग्न्याधेयं नोपनमेद्ब्रह्मौदनं पक्त्वा समिध आधाय यदैनमुपनमेदथाऽऽदधीत ॥ १२ ॥ तस्य याथाकामी भरणकल्पानाम् ॥ १३ ॥ द्वादशाहं चरेदेकाहं वा ॥ १४ ॥ श्व आधास्यमानः पुनर्ब्रह्मौदनं पचति ॥ १५ ॥ योऽस्याग्नि-माधास्यन्स्यात्स एतां रात्रिं व्रतं चरति न मांसमश्नाति न स्त्रियमुपैति ॥ १६ ॥ प्रजा अग्ने संवासयाऽऽशाश्च पशुभिः सह । राष्ट्राण्यस्मा आधेहि यान्यासन्स-वितुः सव इत्युत्तरेण गार्हपत्यायतनं कल्माषमजं बध्नाति ॥ १७ ॥

इति सप्तमी कण्डिका ॥

अथ यजमानो व्रतमुपैति वाचं च यच्छत्यमृतात्सत्यमुपैमि मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामीति ॥ १ ॥ वीणातूणवेनैनमेतां रात्रिं जागरयन्ति ॥ २ ॥ अपि वा न जागर्ति न वाचं यच्छति ॥ ३ ॥ शल्कैरेतां रात्रिमेनमग्निमिन्धान आस्ते शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम् । उभयो-र्लोकयोर्ऋद्ध्वाऽति मृत्युं तराम्यहमित्येतया ॥ ४ ॥ तस्मिन्नुपव्युषमरणी निष्ट-पति जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्जनिष्यते । अग्निमश्वत्था-दधि हव्यवाहꣳ शमीगर्भाज्जनयन्यो मयोभूः । अयं ते योनिर्ऋत्विय इत्येताभ्याम् ॥ ५ ॥ अग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्य इत्यरणी अभिमन्त्र्य मही विश्पत्नी सदने ऋतस्यार्वाची एतं

धरुणे रयीणाम् । अन्तर्वत्नी जन्यं जातवेदसमध्वराणां जनयथः पुरोगामित्यरणी आह्रियमाणे यजमानः प्रतीक्षते ॥६॥ दोहा च ते दुग्धभृत्चोर्वरी ते ते भागधेयं प्रयच्छामीति यजमानाय प्रयच्छति ॥ ७ ॥ आरोहतं दशतꣳ शक्करीर्ममर्तेनाग्न आयुषा वर्चसा सह । ज्योग्जीवन्त उत्तरामुत्तराꣳ समां दर्शमहं पूर्णमासं यज्ञं यथा यजा इति प्रतिगृह्णर्तिवयवती स्थो अग्निरेतसौ गर्भं दधाथां ते वामहं ददे । तत्सत्यं यद्वीरं बिभृथो वीरं जनयिष्यथः । ते मत्प्रातः प्रजनिष्येथे ते मा प्रजाते प्रजनयिष्यथः । प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोके इति प्रतिगृह्याभिमन्त्रयेत यजमानः ॥ ८ ॥ इत्यष्टमी कण्डिका ॥

इति द्वितीयः पटलः ॥ २ ॥

मयि गृह्णाम्यग्रे अग्निं यो नो अग्निः पितर इत्युभौ जपतः, अपेत वीतेति गार्हपत्यायतनमुद्धत्य शं नो देवीरभिष्टय इत्यद्भिरवोक्षति ॥१॥ एवं दक्षिणाग्नेराहवनीयस्य सभ्यावसथ्ययोश्च ॥२॥ एवमनुपूर्वाण्येवैष्वत ऊर्ध्वं कर्माणि क्रियन्ते ॥३॥ सिकतानामर्धं द्वेधं विभज्यार्धं गार्हपत्यायतने निवपत्यर्धं दक्षिणाग्नेः । अर्धं मेधं विभज्य पूर्वेषु ॥ ४ ॥ एतेनैव कल्पेन सर्वान्पार्थिवान्निवपति ॥ ५ ॥ अग्नेर्भस्मासीति सिकता निवपति संज्ञानमित्यूषान् ॥ ६ ॥ तान्निवपन्यदद्श्चन्द्रमासि कृष्णं तदिहास्त्विति मनसा ध्यायति ॥ ७ ॥ उदेह्यग्ने अधि मातुः पृथिव्या विशा आविश महतः सधस्थात् । अ सुं त्वा ये दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपामित्याखुकरीषम् । यत्पृथिव्या अनामृतꣳ संबभूव त्वे सचा । तदग्निरग्नयेऽददात्तस्मिन्नाधीयतामयमिति गार्हपत्यायतने वल्मिकवपां निवपति ॥ ८ ॥ यदन्तरिक्षस्येति दक्षिणाग्नेः । यद्दिव इति पूर्वेषु ॥ ९ ॥ उत्समुद्रान्मधुमाꣳ ऊर्मिरागात्साम्राज्याय प्रतरां दधानः । अमी च ये मघवानो वयं चेषमूर्जं मधुमत्संभरेमेति सूदम् । इयत्यग्र आसीरिति वराहविहतम् ॥ १० ॥ अदो देवी प्रथमाना पृथग्यद्देवैर्न्युप्ता व्यसर्पो महित्वा । अदꣳ हथाः शर्कराभिस्त्रिविष्टप्यजयो लोकान्प्रदिशश्चतस्र इति शर्कराः । द्वेष्यं च मनसा ध्यायति ॥११॥

॥ इति नवमी कण्डिका ॥

ऋतꣳ स्तृणामि पुरीषं पृथिव्यामृतेऽध्यग्निमादधे सत्येऽध्यग्निमादध इत्यायतनेषु संभारानन्व्यूहति ॥ १ ॥ सं या वः प्रियास्तनुव इत्येषा । सं वः सृजामि हृदयानि सꣳसृष्टं मनो अस्तु वः । सꣳसृष्टः प्राणो अस्तु व इति वानस्पत्यान्संसृज्य सिकतावन्निवपतीतः प्रथमं जज्ञे अग्निरित्येतया ॥ २ ॥ यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्षे दिवि याः पृथिव्याम् । ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्न इति गार्हपत्यायतने सौवर्णं हिरण्यशकलमुत्तरतः संभारेषूपास्यति ॥ ३ ॥ चन्द्रमग्निं चन्द्ररथं हरित्वचं वैश्वानरमप्सुषदं सुवर्विदम् । विगाहं तूर्णिं तविषीभि-

रावृतं भूर्णी देवास इह सुश्रियं दधुरित्युपास्तमभिमन्त्रयते । द्वेष्याय रजतं प्रयच्छति ॥४॥ यदि द्वेष्यं नाधिगच्छेद्यां दिशं द्वेष्यः स्यात्तेन निरस्येत् ॥५॥ एवं सर्वेषूपास्य करोति ॥ ६ ॥ ब्राह्मौदनिकाद्भस्मापोह्य तस्मिञ्छमीगर्भादग्निं मन्थति ।७॥ उद्यत्सु रश्मिषु दशहोत्रारणी समवदधाति ॥ ८ ॥ सहाग्नेऽग्निना जायस्व सह रय्या सह पुष्ट्या सह प्रजया सह पशुभिः सह ब्रह्मवर्चसेने-त्युपतिष्ठत्यश्वेऽग्निं मन्थति ॥ ९ ॥ श्वेतोऽश्वोऽविक्लिन्नाक्षो भवति रोहितो वाऽसितजानुरपि वा य एव कश्चित्साण्डः ॥ १० ॥ मथ्यमाने शक्तेः सांकृतेः साम गायति । धूमे जाते गाथिनः कौशिकस्य । अरण्योर्निहितो जातवेदा इति च ॥ ११ ॥ उपावरोह जातवेद इति निर्वर्त्यमानमभिमन्त्रयते ॥१२॥

॥ इति दशमी कण्डिका ॥

अत्र चतुर्होतॄन्यजमानं वाचयति ॥ १ ॥ अजनन्नग्निः पूर्वः पूर्वेभ्यः पवमानः शुचिः पावक ईड्य इति जातमभिमन्त्रयते ॥ २ ॥ जाते यजमानो वरं ददाति ॥ ३ ॥ गौर्वै वरोऽतिवरोऽन्यो धेनुर्वरोऽतिवरोऽ-न्योऽनड्वान्वरोऽतिवरोऽन्यः पष्ठौही वरोऽतिवरोऽन्यः ॥ ४ ॥ जातं यज-मानोऽभिप्राणिति प्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः पोषेण मह्यं दीर्घा-युत्वाय शतशारदाय शतꣳ शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्यायेति ॥५॥ अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीडुजम्भम् । दश स्वसारो अग्रुवः समीचीः पुमाꣳसं जातमभिसंरभन्तामिति जातमञ्जलिनाऽभिगृह्य सम्राडसि विरा-डसि सारस्वतौ त्वोत्सौ समिन्धातामन्नादं त्वाऽन्नपत्यायेत्युपसमिध्याथैनं प्राञ्चमु-द्धृत्याऽऽसीनः सर्वेषां मन्त्राणामन्तेन रथन्तरे गीयमाने यज्ञायज्ञीये च यथर्ष्या-धानेन प्रथमया व्याहृत्या द्वाभ्यां वा प्रथमाभ्यां च सर्पराज्ञीभ्यां प्रथमेन च घर्मशिरसा ॥६॥ भृगूणां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीति भार्गवस्याऽऽद-ध्यात् । अङ्गिरसां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीति यो ब्राह्मण आङ्गि-रसः स्यात् । आदित्यानां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीत्यन्यासां ब्राह्मणीनां प्रजानाम् । वरुणस्य त्वा राज्ञो व्रतपते व्रतेनाऽऽदधामीति राज्ञः । इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनाऽऽदधामीति राजन्यस्य । मनोस्त्वा ग्रामण्यो व्रतपते व्रते-नाऽऽदधामीति वैश्यस्य । ऋभूणां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीति रथकार-स्येति यथर्ष्याधानानि ॥ ७ ॥ इत्येकादशी कण्डिका ।

भूर्भुवः सुवरिति व्याहृतयः । भूमिर्भूम्नेति सर्पराज्ञियः । घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भुवत् । छर्दिस्तोकाय तनयाय यच्छ । वातः प्राणस्तदयमग्निः संप्रियः पशुभिर्भुवत् । स्वदितं तोकाय तनयाय पितुं पच । अर्कश्चक्षुस्तदसौ

सूर्यस्तदथमग्निः संप्रियः पशुभिर्भुवत् । यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः शुक्रं ज्योतिरजस्रं तेन मे दीदिहि तेन त्वाऽऽदधेऽग्निनाऽग्ने ब्रह्मणेति घर्मशिरांसि ॥ १॥ यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः । ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने । प्राणं त्वाऽमृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै । दिवस्त्वा वीर्येण पृथिव्यै महिम्नाऽन्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे । अग्ने गृहपतेऽहे बुध्न्य परिषद्य दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय । पृथिव्यास्त्वा मूर्धन्सादयामि यज्ञिये लोके । यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतदिमहं तं त्वयाऽभिनिदधामीति संभारेषु निदधाति ॥ २ ॥ सुगार्हपत्यो विदहन्नरातरुिषसः श्रेयसीः श्रेयसीर्दधत् । अग्ने सपत्नां अपबाधमानो रायस्पोषमिषमूर्जमस्मासु धेहीत्याधीयमानमभिमन्त्रयते यजमानो धर्मशिरांसि चैनमध्वर्युर्वाचयति ॥३॥ इति द्वादशी काण्डिका ॥

## इति तृतीयः पटलः ॥३॥

अर्धोदिते सूर्य आहवनीयमादधाति ॥ १ ॥ उदिते ब्रह्मवर्चसकामस्य ॥ २ ॥ गार्हपत्ये प्रणयनीयमाश्वत्थमिध्ममादीपयति सिकताश्चोपयमनीरुपकल्पयते ॥ ३ ॥ तमुद्यच्छत्योजसे बलाय त्वोद्यच्छे वृषणे शुष्मायाऽऽयुषे वर्चसे । सपत्नतूरसि वृत्रतूः । यस्ते देवेषु महिमा सुवर्गो यस्त आत्मा पशुषु प्रविष्टः । पुष्टिर्या ते मनुष्येषु प्रथे तया नो अग्ने जुषमाण एहि । दिवः पृथिव्याः पर्यन्तरिक्षाद्वातात्पशुभ्यो अध्योषधीभ्यः । यत्र यत्र जातवेदः संबभूथ ततो नो अग्ने जुषमाण एहि । उदु त्वा विश्वे देवा इत्येताभिस्तिसृभिः ॥ ४ ॥ उपरीवाग्निमुद्यच्छति ॥ ५ ॥ उद्यतमुपयतं धारयति ॥ ६ ॥ अथाश्वस्य दक्षिणे कर्णे यजमानमग्नितनूर्वाचयति या वाजिन्नग्नेः पशुषु पवमाना प्रिया तनूस्तामावह या वाजिन्नग्नेरप्सु पावका प्रिया तनूस्तामावह या वाजिन्नग्नेः सूर्ये शुचिः प्रिया तनूस्तामावहेति । धारयत्येवाग्निम् ॥ ७ ॥ अथाग्नीध्रो लौकिकमग्निमाहृत्य मथित्वा वोर्ध्वज्ञुरासीनो दक्षिणमग्निमादधाति यज्ञायज्ञीये गीयमाने यथर्ष्याधानेन द्वितीयया व्याहृत्या तिसृभिः सर्पराज्ञीभिर्द्वितीयेन च घर्मशिरसा । यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः । ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने । व्यानं त्वाऽमृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै । दिवस्त्वा वीर्येण पृथिव्यै महिम्नाऽन्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे । अग्नेऽन्नपा मयोभुव सुशेव दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय । पृथिव्यास्त्वा

मुर्धन्सादयामि यज्ञिये लोके । यो नो अग्ने निष्टयो योऽनिष्टयोऽभिदासती-दमहं तं त्वयाऽभिनिदधामीति संभारेषु निदधाति ॥ ८ ॥

इति त्रयोदशी कण्डिका ॥

यो ब्राह्मणो राजन्यो वैश्यः शूद्रो वाऽसुर इव बहुपुष्टः स्यात्तस्य गृहादाह-त्याऽऽदध्यात्पुष्टिकामस्य ॥ १ ॥ गृहे त्वस्य ततो नाश्नीयात् ॥ २ ॥ अम्बरी-षादन्नकामस्य वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्य ॥ ३ ॥ वामदेव्यमभिगायत आहवनीय उद्ध्रियमाणे ॥ ४ ॥ प्राचीमनु प्रदिशमित्येषा । विक्रमस्व महाꣳ असि वेदिषन्मानुषेभ्यः । त्रिषु लोकेषु जागृहि प्रजया च धनेन च । इमा उ मामुपतिष्ठन्तु राय आभिः प्रजाभिरिह संवसेय । इहो इडा तिष्ठतु विश्वरूपी मध्ये वसोर्दीदिहि जातवेद इति प्राञ्चोऽग्रप्रथमा अग्निं प्रव्रजन्ति ॥ ५ ॥ दक्षि-णतो ब्रह्मा रथं रथचक्रं वा वर्तयति यावच्चक्रं त्रिः परिवर्तते ॥ ६ ॥ षट्कृत्वो वैश्यस्य ॥ ७ ॥ जानुदघ्ने धारयमाणस्तृतीयमध्वनोऽग्निं हरति नाभिदघ्ने तृतीय-मास्यदघ्ने तृतीयम् । न कर्णदघ्नमत्युद्गृह्णाति ॥ ८ ॥ यद्युद्गृह्य निगृह्णी-यान्मुखेन संमायाऽऽदध्यात् ॥९॥ नाग्निमादित्यं च व्यवेयात् ॥ १० ॥ दक्षि-णतः परिगृह्य हरति ॥ ११ ॥ अर्धाध्वे यजमानो वरं ददाति ॥ १२ ॥ अर्धा-ध्वे हिरण्यं निधाय नाकोऽसि ब्रध्नः प्रतिष्ठा संक्रमण इत्यतिक्रामति ॥ १३ ॥ प्राञ्चमश्वमभ्यस्थाद्विश्वा इति दक्षिणेन पदोत्तरतः संभारानाक्रमयति यथाऽऽहि-तस्याग्नेरङ्गाराः पदमध्यववर्तेरन्निति ॥१४॥ प्रदक्षिणमावर्तयित्वा प्रदक्कन्द इति पुनरेवाऽऽक्रमयति ॥ १५॥ पुरस्तात्प्रत्यञ्चमश्वं धारयति ॥ १६ ॥ पूर्ववाह्यो भवति ॥ १७ ॥ तदभावेऽनड्वान्पूर्ववाडेतानि कर्माणि करोतीति पैङ्गायनि-ब्राह्मणं भवति ॥ १८ ॥ इति चतुर्दशी कण्डिका ॥

कमण्डलुपद आदधीतेति बह्वृचब्राह्मणम् । अजस्य पद आदधीतेति वा-जसनेयकम् ॥ १ ॥ अथ यजमानः शिवा जपति ये ते अग्ने शिवे तनुवौ विराट् च स्वराट् च ते मा विशतां ते मा जिन्वताम् । ये ते अग्ने शिवे तनुवौ सम्राट् चाभिभूश्च ते मा विशतां ते मा जिन्वताम् । ये ते अग्ने शिवे तनुवौ विभूश्च परिभूश्च ते मा विशतां ते मा जिन्वताम् । ये ते अग्ने शिवे तनुवौ प्रभ्वी च प्रभूतिश्च ते मा विशतां ते मा जिन्वताम् । यास्ते अग्ने शिवास्तनुवस्ताभि-स्त्वाऽऽदध इति ॥ २ ॥ यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति यजमानो द्वेष्याय प्रहिणोति ताभिरेनं पराभावयति ॥ ३ ॥ अरण्येऽनुवाक्या भवन्ति ॥ ४ ॥ यदिदं दिवो यददः पृथिव्याः संविदाने रोदसी संबभूवतुः । तयोः पृष्ठे

तु जातवेदाः शंभूः प्रजाभ्यस्तनुवे स्योन इत्यभिमन्त्र्य पुरस्तात्प्रत्यङ् तिष्ठ-
हवनीयमादधाति ॥ ५ ॥ बृहति गीयमाने श्यैतवारवन्तीययोर्यज्ञायज्ञीये च
ार्ध्याधानेन सर्वाभिर्व्याहृतीभिः सर्वाभिः सर्पराज्ञीभिस्तृतीयेन च घर्मशिरसा
ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः । ताभिः संभूय
णः सजोषा हिरण्ययोनिर्वह हव्यमग्ने । अपानं त्वाऽमृत आदधाम्यन्नाद्म-
याय गोप्तारं गुप्त्यै । दिवस्त्वा वीर्येण पृथिव्यै महिम्नाऽन्तरिक्षस्य पोषेण
नां तेजसा सर्वपशुमादधे । अग्ने सम्राडजैकपादाहवनीय दिवः पृथिव्याः
न्तरिक्षाल्लोकं विन्द यजमानाय । पृथिव्यास्त्वा मूर्धन्सादयामि यज्ञिये लोके ।
नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतदिमहं तं त्वयाऽभिदधामीति संभारेषु
धाति ॥ ६ ॥ इति पञ्चदशी कण्डिका ॥

आनशे व्यानशे सर्वमायुर्व्यानशे । अहं त्वदस्मि मदसि त्वमेतन्ममासि योनि-
योनिरस्मि । ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेद इत्याधी-
ानमभिमन्त्रयते यजमानः ॥ १ ॥ व्याहृतीः सर्पराज्ञीर्घर्मशिरांसीति सर्वेष्वाधा-
यजमानोऽनुवर्तयते येन येनाऽऽदधाति ॥ २ ॥ नाऽऽहितमनभिहुतमग्निमुपा-
शति । आज्येनौषधीभिश्च शमयितव्यः ॥ ३ ॥ या ते अग्ने पशुषु पवमाना
या तनूर्या पृथिव्यां याऽग्नौ या रथंतरे या गायत्रे छन्दसि तां त एतेना-
जे स्वाहा । या ते अग्नेऽप्सु पावका प्रिया तनूर्याऽन्तरिक्षे या वायौ या
देव्ये या त्रैष्टुभे छन्दसि तां त एतेनावयजे स्वाहा । या ते अग्ने सूर्ये शुचिः
या तनूर्या दिवि याऽऽदित्ये या बृहति या जागते छन्दसि तां त एतेनावयजे
हेत्येतैः प्रतिमन्त्रमाज्यमोषधीश्च जुहोति ॥ ४ ॥ समिध आदधातीत्येके
५ ॥ ब्रह्माऽग्न्याधेये सामानि गायति ॥ ६ ॥ प्रतिषिद्धान्येकेषाम् ॥ ७ ॥
हृतीभिरेवोद्गीथं भवतीति वाजसनेयकम् ॥ ८ ॥ इति षोडशी कण्डिका ॥

॥ इति चतुर्थः पटलः ॥ ४ ॥

ततः सभ्यावसथ्यावादधाति लौकिकमग्निमाहृत्य मथित्वाऽऽहवनीयाद्वा यथ-
धानेन ॥ १ ॥ अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः । अग्निर्ऋषिः पव-
नः पाञ्चजन्यः पुरोहितः । तमीमहे महागयमिति तिस्र आश्वत्थ्यः समिध
एकस्मिन्नादधाति ॥ २ ॥ आहवनीये वा तिस्रः ॥ ३ ॥ समुद्रादूर्मिर्मधुमाँ
ारदुपांशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य
भिः । वयं नाम प्रब्रवामा घृतेनास्मिन्यज्ञे धारयामा नमोभिः । उप ब्रह्मा

शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् । चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याꣳ आविवेशेति शमीमय्यो घृतान्वक्तास्तिसृभिस्तिस्र एकैकस्मिन्नादधाति । आहवनीये वा तिस्रः ॥ ४ ॥ एवं नानावृक्षीयाः । मेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीं समिधमादधाति । विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीम् । ताꣳ सवितुर्वरेण्यस्य चित्रामिति शमीमयीम् ॥ ५ ॥ ततस्तूष्णीमग्निहोत्रं जुहोति ॥ ६ ॥ अपि वा द्वादशगृहीतेन स्रुचं पूरयित्वा प्रजापतिं मनसा ध्यायञ्जुहोति । साऽग्निहोत्रस्य स्थाने भवति ॥ ७ ॥ यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति यजमानो द्वेष्याय प्रहिणोति ताभिरेनं नितमयति । अरण्येऽनुवाक्या भवन्ति ॥ ८ ॥ इति सप्तदशी कण्डिका ॥

द्वादशगृहीतेन स्रुचं पूरयित्वा सप्त ते अग्ने समिधः सप्त जिह्वा इति सप्तवत्या पूर्णाहुतिं जुहोति । हुतायां यजमानो वरं दत्त्वा शिवा जपति । ये अग्नयो दिवो ये पृथिव्याः समागच्छन्तीषमूर्जं दुहानाः । ते अस्मा अग्नयो द्रविणं दत्त्वेष्टाः प्रीता आहुतिभाजो भूत्वा यथालोकं पुनरस्तं परेत स्वाहेति जुहोति ॥ १ ॥ अथ विराट्क्रमैर्यजमान उपतिष्ठतेऽयर्वापितुं मे गोपायान्नं प्राणेन संमितम् । त्वया गुप्ता इषमूर्जं मदन्तो रायस्पोषेण समिषा मदो मेत्यन्वाहार्यपचनम् । नर्य प्रजां मे गोपाय मूलं लोकस्य संततिम् । आत्मनो हृदयान्निर्मितां तां ते परिददाम्यहमिति गार्हपत्यम् । शꣳस्य पशून्मे गोपाय विश्वरूपं धनं वसु । गृहाणां पुष्टिमानन्दं ताꣳस्ते परिददाम्यहमित्याहवनीयम् । सप्रथ सभां मे गोपायेन्द्रियं भूतिवर्धनम् । विश्वजनस्य च्छायां तां ते परिददाम्यहमिति सभ्यम् । अहे बुध्निय मन्त्रं मे गोपाय श्रियं च यशसा सह । अहये बुध्नियाय मन्त्रं श्रियं यशः परिददाम्यहमित्यावसथ्यम् । पञ्चधाऽग्नीन्व्यक्रामद्विराट् सृष्टा प्रजापतेः । ऊर्ध्वाऽरोहद्रोहिणी योनिरग्नेः प्रतिष्ठितिरिति सर्वान् ॥ २ इत्यष्टादशी कण्डिका ॥

## ॥ इति पञ्चमः पटलः ॥ ५ ॥

आग्नेयस्याष्टाकपालस्य तन्त्रं प्रक्रमयति ॥ १ ॥ निरुप्तं हविरुपसन्नमप्रोक्षितं भवति । अथ सभाया मध्येऽधिदेवनमुद्धत्यावोक्ष्याक्षान्न्युप्याक्षेषु हिरण्यं निधाय समूह्य व्यूह्य प्रथयित्वा निषसाद धृतव्रत इति मध्येऽधिदेवने राजन्यस्य

१ यथा यत्राऽऽम्नातो भाति समुह्य व्युह्येति "उपसर्गाद्ध्रस्व ऊहतेः" इति सूत्रात् । तत्राऽपि समूहे(ह्ये)ति नामधातोर्ल्यप्प्रत्यय इति ध्येयम् । व्यूह्येत्यत्राप्येवमेव । अर्थभेदोऽपि नानुसंधेयः । समूह्य—संहृत्य, व्यूह्य—वियुत्य । एवमुत्तराधिकस्थलेष्वप्यूह्यम् ।

जुहोति ॥ २ ॥ आवसथे परिषदो मध्ये हिरण्यं निधाय मन्त्रवत्या हिरण्ये जुहोति प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युकृथ्यम् । यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकाꣳसि चक्रिर इति ॥ ३ ॥ उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः । विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु न इत्युक्त्वा शतमक्षान्यजमानाय प्रयच्छन्नाह व्रीहिभ्यो गां दीव्यताहिंसन्तः परूꣳषि विशसतेति ॥४॥ संप्रैषवत्कुर्वन्ति ॥५॥ इत्येकोनविंशी कण्डिका ॥

कृतं यजमानो विजिनाति ॥ १ ॥ तया यज्जयन्ति तदन्नं संस्कृत्य सभासद्भ्य उपहरन्ति ॥२॥ आवसथे भुञ्जते ॥ ३ ॥ कलप्तिसामनमीभ्यामग्नीन्यजमान उपतिष्ठते कल्पेतां द्यावापृथिवी येऽग्नयः समनस इति ॥४॥ प्रोक्षादि कर्म प्रतिपद्यते ॥ ५ ॥ आग्नेयस्य दक्षिणाकाले दक्षिणा ददाति ॥ ६ ॥ अजं पूर्णपात्रमुपबर्हणं सार्वसूत्रमित्यग्नीधे ॥ ७ ॥ वहिनमश्वं ब्रह्मणेऽध्वर्यवे वा ॥ ८ ॥ आहवनीयदेशेऽनड्वाहमध्वर्यवे ॥ ९ ॥ अपरेण गार्हपत्यं धेनुं होत्रे ॥ १० ॥ वासो मिथुनौ गावौ नवं च रथं ददाति । तानि साधारणानि सर्वेषाम् ॥११॥ आद्वादशभ्यो ददातीत्युक्त्वाऽऽह काममूर्ध्वं देयमपरिमितस्यावरुद्ध्या इति विज्ञायते ॥ १२ ॥ ऊर्ध्वमादिष्टदक्षिणाभ्यो वदति षड् देया द्वादश देयाश्चतुर्विंशतिर्देया इति ॥ १३ ॥ ता विकल्पन्ते ॥ १४ ॥ येषां पशूनां पुष्टिं भूयसीं कामयेत तेषां वयसाम् ॥ १५ ॥ दित्यौहीं दद्याद्दित्यवाहं च मुष्करम् ॥ १६ ॥ वर्धमानां दक्षिणां ददाति ॥ १७ ॥ बह्वनाढ्योऽग्नीनादधीत काममेवैकां गां दद्यात्सा गवां प्रत्याम्नायो भवतीति विज्ञायते ॥ १८ ॥ सिद्धमिष्टिः संतिष्ठते ॥ १९ ॥ इति विंशी कण्डिका ॥ [ इति षष्ठः पटलः ॥ ६ ॥ ]

पवमानहवींषि सद्यो निर्वपेत् ॥ १ ॥ द्वादशाहे द्व्यहे त्र्यहे चतुरहेऽर्धमासे मास्यृतौ संवत्सरे वा ॥ २ ॥ न सोमेनायक्ष्यमाणः पुरा संवत्सरान्निर्वपेत् ॥३॥ निर्वपेदित्येके ॥४॥ यदि निर्वपेदग्नये पवमानायाग्नये पावकायाग्नये शुचय इति तिस्र आज्याहुतीः सोमदेवताभ्यो वा हुत्वा निर्वपेत(त्) ॥ ५ ॥ समानतन्त्राणि नानातन्त्राणि वाऽऽग्नेयेन वा समानतन्त्राणि ॥ ६ ॥ यं कामयेत पापीयान्स्यादिति तस्यैकमेकमेतानि हवींषि निर्वपेत् । न वसीयान्न पापीयानिति तस्य साकं सर्वाणि । यं कामयेतोत्तरं वसीयाञ्छ्रेयान्स्यादिति तस्याग्नये पवमानाय निरुप्य पावकशुचिभ्यां समानबर्हिषी निर्वपेत् ॥ ७ ॥ शतमानं हिरण्यं दक्षिणा ॥८॥ पूर्वयोर्हविषोर्द्वे त्रिंशन्माने उत्तरस्मिंश्चत्वारिंशन्मानम् ॥ ९ ॥ येन हिरण्यं मिमते तेन मीत्वा ददाति ॥१०॥ सिद्धमिष्टिः संतिष्ठते ॥११॥ इत्येकविंशी कण्डिका ॥

ऐन्द्राग्नमेकादशकपालमनुनिर्वपत्यादित्यं च घृते चरुम् ॥ १ ॥ सप्तदश सामिधेन्यः ॥ २ ॥ चतुर्धाकरणकाल आदित्यं ब्रह्मणे परिहरति ॥ ३ ॥ तं चत्वार आर्षेयाः प्राश्नन्ति ॥ ४ ॥ प्राशितवद्भ्यः समानं वरं ददाति । धेन्वनडुहोर्दानमेके समामनन्ति । सिद्धमिष्टिः संतिष्ठते ॥ ५ ॥ आग्नावैष्णवमेकादशकपालमनुनिर्वपत्यग्नीषोमीयमेकादशकपालं विष्णवे शिपिविष्टाय त्र्युद्धौ घृते चरुम् ॥ ६ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ७ ॥ आदित्यं घृते चरुं सप्तदशसामिधेनीकं धेनुदक्षिणं सर्वेषामनुनिर्वाप्याणां स्थाने वाजसनेयिनः समामनन्ति ॥ ८ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ९ ॥ अग्निहोत्रमारप्स्यमानो दशहोतारं मनसाऽनुद्रुत्याऽऽहवनीये सग्रहं हुत्वाऽथ सायमग्निहोत्रं जुहोति ॥ १० ॥ व्याहृतीभिरुपसादयेत् ॥ ११ ॥ संवत्सरे पर्यागत एताभिरेवोपसादयेत् ॥ १२ ॥ द्वादशाहमजस्रेष्वग्निषु यजमानः स्वयमग्निहोत्रं जुहुयादप्रवसन्नहतं वासो बिभर्ति ॥ १३ ॥ इति द्वाविंशी कण्डिका ॥

यां प्रथमामग्निहोत्राय दोग्धि तां दक्षिणां ददाति ॥ १ ॥ अथैकेषाम् । अग्नीनाधाय हस्ताववनिज्य संवत्सरमग्निहोत्रं हुत्वाऽथ दर्शपूर्णमासावारभते ताभ्यां संवत्सरमिष्ट्वा सोमेन पशुना वा यजते तत ऊर्ध्वमन्यानि कर्माणि कुरुते ॥ २ ॥ त्रयोदशरात्रमहतवासा यजमानः स्वयमग्निहोत्रं जुहुयादप्रवसन्नैव सोमेन पशुना वेष्ट्वाऽग्नीनुत्सृजति यथा सुयवसान्कृत्वा प्राज्यात्तादृक्तादिति शाट्यायनिब्राह्मणं भवति ॥ ३ ॥ पूर्णा पश्चाद्यत्ते देवा अदधुरिति सारस्वतौ होमौ हुत्वाऽन्वारम्भणीयामिष्टिं निर्वपति ॥ ४ ॥ आग्नावैष्णवमेकादशकपालं सरस्वत्यै चरुं सरस्वते द्वादशकपालम् ॥ ५ ॥ अग्नये भगिनेऽष्टाकपालं यः कामयेत भगयन्नादः स्यामिति ॥ ६ ॥ नित्यवदेके समामनन्ति ॥ ७ ॥ नानातन्त्रमेके ॥ ८ ॥ त्वद्विश्वा सुभग सौभगान्यग्ने वि यन्ति वनिनो न वयाः । श्रुष्टी रयिर्वाजो वृत्रतूर्ये दिवो वृष्टिरीड्यो रीतिरपाम् । त्वं भगो न आ हि रत्नमिषे परिज्मेव क्षयसि दस्मवर्चाः । अग्ने मित्रो न बृहत ऋतस्यासि क्षत्ता वामस्य देव भूरेरिति याज्यानुवाक्ये ॥ ९ ॥ इति त्रयोविंशी कण्डिका ॥

चित्तं च चित्तिश्चेति पुरस्तात्स्विष्टकृतो जयाञ्जुहोति ॥ १ ॥ चित्ताय स्वाहा चित्त्यै स्वाहेत्येके समामनन्ति ॥ २ ॥ प्रजापतिर्जयानिति त्रयोदशीम् ॥ ३ ॥ अग्ने बलद सह ओजः क्रममाणाय मेदाः । अभिशस्तिकृतेऽनभिशस्तेन्यायास्यै जनतायै श्रैष्ठ्यायेति चतुर्दशीं यः कामयेत चित्रं जनतायां स्वा-

मिति । चित्रं भवति शबलं त्वस्य मुखे जायते ॥ ४ ॥ मिथुनौ गावौ दक्षिणा ॥ ५ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ६ ॥ दर्शपूर्णमासावारप्स्यमानश्चतुर्होतारं मनसाऽनुद्रुत्याऽऽहवनीये सग्रह५ हुत्वाऽथ दर्शपूर्णमासावारभते ॥ ७ ॥ व्याहृतीभिर्हवी५ष्यासादयेत्संवत्सरे पर्यागत एताभिरेवाऽऽसादयेत् ॥८॥ अमावास्यायामादधानस्यैतत् । पौर्णमास्यां तु पूर्वस्मिन्पर्वणि सेष्टि सान्वारम्भणीयमाधानमपवृज्य ॥ ९ ॥ इति चतुर्विंशी कण्डिका ॥

श्वोभूते पौर्णमासेन यजते ॥ १ ॥ अनन्तरमाधानादाहिताग्निव्रतानि ॥ २ ॥ नानृतं वदेत् ॥ ३ ॥ नास्य ब्राह्मणोऽनाश्वान्गृहे वसेत् ॥ ४ ॥ सूर्योढमतिथिं वसत्यै नापरुन्धीत् ॥ ५ ॥ नर्वीसर्पकस्याश्नीयात् ॥ ६ ॥ क्लिन्नं दारु नादध्यात् ॥ ७ ॥ अन्तर्नाव्यपां नाश्नीयात् ॥ ८ ॥ स्वकृत इरिणे नावस्येत् ॥ ९ ॥ पुण्यः स्यात् ॥ १० ॥ हिंकृत्य वाग्यतः स्त्रियमुपेयात् ॥ ११ ॥ व्याहरेद्वा ॥१२॥ न सायमाहुतावहुतायामश्नीयात् ॥१३॥ एवं प्रातः ॥ १४ ॥ आहिताग्नेर्गृहे न सायमहुते भोक्तव्यं तथा प्रातरित्यन्येषां व्रतम् ॥ १५ ॥ नक्तं नान्यदन्नाद्दद्यात् ॥१६॥ दद्यादित्येके ॥१७॥ अन्नं तु ददन्न दधीत ॥ १८ ॥ नैतस्मिन्संवत्सरे पशुनाऽनिष्ट्वा मांसं भक्षयेत् ॥ १९ ॥ मनसाऽग्निभ्यः प्रहिणोमि भक्षं मम वाचा तं सह भक्षयन्तु । अप्रमाद्यन्नप्रमत्तश्चरामि शिवेन मनसा सह भक्षयतेति यथादिष्टो भक्षयेदेतं मन्त्रमुक्त्वा भक्षयेत् ॥ २० ॥

इति पञ्चविंशी कण्डिका ॥

॥ इति सप्तमः पटलः ॥ ७ ॥

समाप्तमग्न्याधेयम् ॥



# आधानसंभारस्मरणपट्टिका ।

| | | |
|---|---|---|
| १ | जायापती | अग्न्याधानादिकर्मानुष्ठानार्थम् |
| २ | ऋत्विजः | याजनार्थम् |
| ३ | अग्न्यागारम् | विहाराद्यर्थम् |
| ४ | अग्न्यायतनम् | अग्निस्थापनाद्यर्थम् |
| ५ | अरणी | अग्निमन्थनार्थम् |
| ६ | स्फ्यः | वेद्युद्धननादिनिमित्तकः |
| ७ | कपालानि | पुरोडाशाधिश्रपणार्थम् |
| ८ | अग्निहोत्रहवणी | अग्निहोत्रादिकार्यार्थम् |
| ९ | शूर्पम् | निर्वापाद्यर्थम् |
| १० | कृष्णाजिनम् | व्रीहिवपाताद्यर्थम् |
| ११ | शम्या | अधिवपनाद्यर्थम् |
| १२ | उलूखलम् | अवहननार्थम् |
| १३ | मुसलम् | |
| १४ | दृषद् | पेषणार्थम् |
| १५ | उपला | |
| १६ | स्रुवः | आज्यावदानाद्यर्थम् |
| १७ | जुहूः | पुरोडाशादिहोमार्थम् |
| १८ | उपभृत् | प्रयाजाद्याज्यधारणार्थम् |
| १९ | ध्रुवा | आज्यग्रहणार्थम् |
| २० | वेदः | संमार्जनाद्यर्थम् |
| २१ | पात्री | पिष्टमर्जनार्थम् |
| २२ | आज्यस्थाली | आज्यनिर्वापार्थम् |
| २३ | प्राशित्रम् | प्राशित्रावदानार्थम् |
| २४ | इडापात्रम् | इडावदानार्थम् |
| २५ | प्रणीताप्रणयनम् | अप्प्रणयनार्थम् |
| २६ | योक्त्रम् | पत्न्याः कटिबन्धनार्थम् |
| २७ | मदन्तीपात्रम् | जलतापनार्थम् |
| २८ | मेक्षणम् | पिष्टभर्जनाद्यर्थम् |
| २९ | वेदाग्राणि | पात्रसंमार्गाय |

| | | |
|---|---|---|
| ३० | अन्वाहार्यस्थाली | दक्षिणौदनश्रपणार्थम् |
| ३१ | उपवेषः | अङ्गारनिरूहणार्थम् |
| ३२ | पिष्टलेपफलीकरणपात्रम् | पिष्टलेपफलीकरणस्थापनार्थम् |
| ३३ | अग्निहोत्रस्थाली | पयोधिश्रयणार्थम् |
| ३४ | अग्निहोत्रस्रुवः | पयउन्नयनार्थम् |
| ३५ | धृष्टिः | भस्माङ्गारनिरूहणार्थम् |
| ३६ | दर्भा अपरिमिताः | पवित्राद्यर्थम् |
| ३७ | सिकताः, ऊषाः<br>आखुकरीषम् , वल्मीकवपा,<br>सूदः—वराहविहतम्<br>शर्कराः—हिरण्यम् रजतम्<br>अश्वत्थः—उदुम्बरः—पर्णः<br>शमी—विकङ्कतः—<br>अशनिहतवृक्षशकलम्<br>पुष्करपर्णम् | गार्हपत्याद्यग्न्यायतनेषु स्थापनार्थम् |
| ३८ | नापितः | क्षौरार्थम् |
| ३९ | शीतोष्णजलम् | स्नानार्थम् |
| ४० | क्षौमवस्त्रचतुष्टयम् | जायपत्योर्धारणार्थम् |
| ४१ | गृह्याग्निः | ब्रह्मौदनाद्यर्थम् |
| ४२ | चित्रियाश्वत्थस्य समिधः<br>सपलाशाः फलवत्यः | ब्रह्मौदनाग्नौ निधानार्थम |
| ४३ | आश्वत्थ्यो नव | गार्हपत्यादिषु होमार्थम् |
| ४४ | शमीमय्यो द्वादश | |
| ४५ | औदुम्बर्यस्तिस्रः | |
| ४६ | वैकङ्कत्यस्तिस्रः | |
| ४७ | पाकः | जायापत्योर्भोजनार्थम् |
| ४८ | तण्डुलाः | ब्रह्मौदनार्थम् |
| ४९ | पात्रकम् | ब्रह्मौदननिर्वापार्थम् |
| ५० | शरावाः षट् | अग्निप्रणयनाद्यर्थम् |
| ५१ | चरुस्थाली | ब्रह्मौदनार्थम् |

| | | |
|---|---|---|
| ५२ | दर्वी | ब्रह्मौदनस्युद्धरणार्थम् |
| ५३ | पैत्तलपात्री | ओदनस्थापनार्थम् |
| ५४ | घृतं पर्याप्तम् | होमाद्यर्थम् |
| ५५ | वस्त्रतर्यंस्तिस्रः | अध्वर्युदानार्थम् |
| ५६ | चत्वारो वराः | ऋत्विग्भ्यो दानार्थम् |
| ५७ | याज्ञियवृक्षकाष्ठानि | अग्निसमिन्धनार्थम् |
| ५८ | अजः कृष्णबिन्दुः | बन्धनार्थम् |
| ५९ | ब्रह्मौदनाभिघारणम् | अरणीनिष्टपनार्थम् |
| ६० | युवा अश्वः | पदस्थापनाद्यर्थम् |
| ६१ | वरः | अध्वर्यवे दानार्थम् |
| ६२ | सिकताः | अग्निप्रणयनार्थम् |
| ६३ | तिल, माष, व्रीहियव, प्रियङ्गवणु, गोधूम, श्यामाक, वेणुबीज, नीवार, जर्तिल, गवीधुक, मर्कटाः* | शमनहोमार्थम् |
| ६४ | रथो रथचक्रं वा | परिवर्तनार्थम् |
| ६५ | वरः | अध्वर्यवे दानार्थम् |
| ६६ | हिरण्यम् | अश्वनिधानाद्यर्थम् |
| ६७ | वरः | अध्वर्यवे |
| ६८ | समिधः प्रादेशमात्र्यः | होमार्थं यथा पर्याप्ता भवेयुः |
| ६९ | परिधयो बाहुमात्राः सामिधेन्यश्चारत्निमात्र्यः | इध्मार्थं यथा पर्याप्ता भवेयुः |
| ७० | तण्डुलपिष्टम् | पुरोडाशार्थम् |
| ७१ | तण्डुलाः स्थाली च | चर्वर्थम् |
| ७२ | दक्षिणा। | ऋत्विग्भ्यो दानार्थम् |

ऋत्विजां नामानि ।

| | |
|---|---|
| अध्वर्युः | ब्रह्मा |
| होता | अग्नीत् |

* मर्कटो धान्यविशेषः । मटकीति भाषायाम् ।

दक्षिणाद्रव्यम् ।

आग्नीध्रे अजं पूर्णपात्रं सावेसूत्रमुपबर्हणम् । ब्रह्मणे अश्वम् । अध्वर्यवे अनड्वाहम् । होत्रे धेनुम् । सर्वेषां वासो मिथुनौ गावौ नवं च रथं गौः ।

अङ्कदक्षिणा ।

अध्वर्यवे तिस्रो वत्सतर्योऽश्वो वरचतुष्टयं च । ब्रह्मणे होत्रेऽग्नीध्रे च प्रत्येकमेकैको वरः । यस्मै कस्मै अग्निहोत्रदक्षिणा गौः । अन्वारम्भणीयदक्षिणा मिथुनौ गावौ । वरशब्दवाच्या गौः ।

इत्याधानप्रभृत्यन्वारम्भणीयान्ता सामान्यतः सामग्रीपट्टिका ।

या चान्याऽर्थवती सा विचार्य शिष्टैः संपाद्या ॥

इत्याधानसंभारस्मरणपट्टिका ॥

## सविधिवाक्याधानविषयानुक्रमणम् ।

| विषयानुक्रमणिका । | विधिवाक्यानि । |
| --- | --- |
| १ आधानसंकल्पः । | १ यो यज्ञस्य इत्युक्त्वा न यजते ते. सं. २। ४। ११ मनसा धिः संकल्पयाति त्रिरुच्चैः बौ. श्रौ. सू. २। १। |
| २ ऋत्विग्वरणम् | २ ऋत्विजो वृणीते आश्व. गृ. १।२३।१। |
| ३ मधुपर्काहरणम् | ३ मधुपर्कमाहरेत् आ. गृ. १।२४।१। |
| ४ अरण्याहरणम् | ४ अरणी आहरति आ. श्रौ. ५।१।२। |
| ५ अरण्याभिमन्त्रणम् | ५ अरणी अभिमन्त्र्य आ. श्रौ. ५।१।४ |
| ६ पार्थिवसंभाराहरणम् | ६ पार्थिवान्संभारान्० आ. श्रौ. ५।१।४ |
| ७ वानस्पत्यसंभाराहरणम् | ७ वानस्पत्यान्संभारा० आ. श्रौ. ५।१।४ |
| ८ संभारनिधानम् | ८ निदधाति आ. श्रौ. ५। ३। १। |
| ९ उदवसानम् | ९ उदवसाय शालीन आदधीत। आ० श्रौ. ५। ३। २२। |
| १० अग्निप्रतिष्ठापनम् | १० इषुमात्रावरमित्यादि आश्व. गृ. १।३।१ |
| ११ देवयजनोद्धननम् | ११ उद्धन्ति तै. ब्रा. १। १। ३ |
| १२ देवयजनावोक्षणम् | १२ अपोऽवोक्षति शान्त्यै तै. ब्रा. १।१।३ |
| १३ शरणाकरणम् | १३ तस्मिन्नुदीचीनवंशं शरणं करोति अ. श्रौ. ५। ४। १। |
| १४ अग्न्यायतनम् | १४ तस्याग्रेण मध्यमं वंशं गार्हपत्यायतनं भवति तस्मात्प्राचीनमष्टासु प्रक्रमेषु ब्राह्मणस्याऽऽहवनीयायतनम्। दक्षिणतः पुरस्ताद्द्वितृतीयदेशे गार्हपत्यस्य नेदीयासि दक्षिणाग्नेरायतनम्। आ. श्रौ. ५।४।२। |
| १५ वपनस्नाने | १५ केशश्मश्रु वपते नखानि निकृन्तते तै. सं. कां. ६।१।१ स्नाति। एवं पत्नी केशावर्जनम् आ. श्रौ. सू. ५। ४। ९. |
| १६ क्षौमवस्त्रधारणम् | १६ क्षौमे वसानौ जायापती आ. श्रौ. सू. ५। ४। १०। |

| | विषयानुक्रमणिका । | विधिवाक्यानि । |
|---|---|---|
| १७ | ब्रह्मौदनिकाग्नेराधानम् | १७ अपराह्णेऽभिवृक्षसूर्ये वौपासनाद्ग्निमाहृत्यापरेण गार्हपत्यायतनं ब्रह्मौदनिकमादधाति. आ. श्रौ. सू. ५।४।१३ |
| १८ | समित्संपादनम् | १८ आ.श्रौ.५।६।२आ.श्रौ.५।१७।२।५।१७।४।५। एतत्सूत्रमूलकः श्लोकश्चित्रियाः समिधस्तिस्र आश्वत्थ्यो नव एव च । शमीमय्यो द्वादश स्युरौदुम्बरसमित्त्रयी । वैकङ्कत्यस्तथा तिस्रः शुष्का होमार्हतां गताः । |
| १९ | जायापत्योर्हविष्यान्नभोजनम् | १९ रागतः प्राप्तं तदिदानीं नियम्यते शिष्टैः । सर्पिर्मिश्रं पयोमिश्रं वा |
| २० | सायंकालिको गृह्यहोमः | २० पाणिग्रहणादि गृह्यं परिचरेत्स्वयम्. आश्व. गृ. सू. १ । ९ |
| २१ | ब्रह्मौदनैर्निर्वापः | २१ ब्रह्मौदनं चतुःशरावं निर्वपति. आ. श्रौ० सू. ५ । १ । १ । |
| २२ | ब्रह्मौदनपचनम् | २२ ब्रह्मौदनं पचति. तै. ब्रा० १।१।९। |
| २३ | ब्रह्मौदनाग्नौ होमः | २३ दर्व्यां ब्रह्मौदनादुद्धृत्य जुहोति.आ. श्रौ. सू. ५ । ५ । ८। |
| २४ | ब्रह्मौदनस्य पृथक्पात्रेषु निक्षेपः | २४ चतुर्धा ब्रह्मौदनं व्युद्धृत्य । आ. श्रौ. सू. ५ । ५ । ९ । |
| २५ | ऋत्विग्भ्यो ब्रह्मौदनदानम् | २५ ऋत्विग्भ्य उपोहतिआ.श्रौ. ५।५।९ |
| २६ | समिद्विवर्तनम् | २६ समिधो विवर्तयतिआ. श्रौ.५।५।१ |
| २७ | समिदाधानम् | २७(१)समिधोऽभ्यवस्याद०तै.ब्रा.१।१।९ |
| | | (२) तिस्र आदधाति ,, |
| | | (३) इयतीर्भवन्ति ,, |
| | | (४) आर्द्रा भवन्ति ,, |
| | | (५) चित्रियस्याश्वत्थस्याऽऽद० ,, |
| | | (६) घृतवतीभिरादधाति ,, |
| | | (७) गायत्रीभिर्ब्राह्मणस्याऽऽद० ,, |

| | विषयानुक्रमणिका । | विधिवाक्यानि । |
|---|---|---|
| २८ | वत्सतरीदानम् | २८ वत्सतरीं ददाति आ. श्रौ. सू. ५।७।१ |
| २९ | ब्रह्मौदनप्राशनम् | २९ प्राश्नन्ति ब्राह्मणा ओदनं तै. ब्रा. १।१।९ |
| ३० | वरदानम् | ३० वरं ददाति आ. श्रौ. ५।७।३ |
| ३१ | अध्वर्योर्व्रतचर्या | ३१ व्रतं चरति आ. श्रौ. सू. ५।७।६ |
| ३२ | अजबन्धनम् | ३२ अजं बध्नाति आ. श्रौ. सू. ५।७।१७ |
| ३३ | यजमानव्रतचर्या | ३३ यजमानो व्रतमुपैति आ. श्रौ. ५।८।१ |
| ३४ | अग्निप्रज्वालनम् | ३४ अग्निमिन्धीत तै. ब्रा. १।१।९ |

## पर्वदिनेऽनुष्ठेयं कर्म ।

---

| | | |
|---|---|---|
| १ | अरणीनिष्टपनम् | १ अरणी निष्टपेत् तै. ब्रा. १।१।९ |
| २ | अरण्यभिमन्त्रणम् | २ अरणी अभिमन्त्र्य आ. श्रौ. सू. ५।८।६ |
| ३ | अरणीप्रतीक्षणम् | ३ यजमानः प्रतीक्षते आ. श्रौ. सू. ५।८।६ |
| ४ | अरणीप्रदानम् | ४ यजमानाय प्रयच्छति आ. श्रौ. सू. ५।८।७ |
| ५ | अरणीप्रतिग्रहणम् | ५ प्रतिगृह्य आ. श्रौ. सू. ५।८।७ |
| ६ | अरण्यभिमन्त्रणम् | ६ अभिमन्त्रयते यजमा. आ. श्रौ. सू. ५।८।८ |
| ७ | जपः | ७ उभौ जपतः आ. श्रौ. ५।९।१ |
| ८ | अग्न्यायतनोद्धननम् | ८ गार्हपत्यायतनमुद्धत्य एवं दक्षिणाग्नेराहवनीयस्य आ. श्रौ. सू. ५।९।१।२ |
| ९ | अवोक्षणम् | ९ अवोक्षति आ. श्रौ. सू. ५।९।१ |
| १० | अनुष्ठानेऽग्नीनामानन्तर्यम् | १० एवमनुपूर्वाण्येवैष्वत ऊर्ध्वं कर्माणि क्रियन्ते आ. श्रौ. सू. ५।९।३ |
| ११ | संभारविभागः | ११ सिकतानामर्धं द्वैधं विभज्य एतेन कल्पेन पार्थिवान्संभा० आ. श्रौ. ५।९।५ |
| १२ | सिकतानिवपनम् | १२ सिकता निवपति तै. ब्रा. १।१।३ |
| १३ | ऊषनिवपनम् | १३ ऊषान्निवपति तै. ब्रा. १।१।३ |

| विषयानुक्रमणिका | विधिवाक्यानि |
|---|---|
| १४ ध्यानम् | १४ अद्रो ध्यायेत् तै. ब्रा. १ । १ । ३ |
| १५ आखुकरीषनिवपनम् | १५ यदाखुकरीषꣳ संभारो भवति तै. ब्रा. १ । १ । ३ । |
| १६ वल्मीकवपानिवपनम् | १६ यद्वल्मीकवपासंभा. भ० तै. ब्रा. १।१।३ |
| १७ सूदनिवपनम् | १७ यस्य सूदः संभारो भ० तै. ब्रा. १।१।३ |
| १८ वराहविहतनिवपनम् | १८ यद्वराहविहतꣳ संभारो भवति तै. ब्रा. १ । १ । ३ । |
| १९ शर्करानिवपनम् | १९ शर्करा भवन्ति धृत्यै तै. ब्रा. १।१।३ |
| २० द्वेष्यध्यानम् | २० द्वेष्यं च मनसा ध्यायति आ. श्रौ. सू. ५ । ९ । ११ । |
| २१ संभारव्यूहनम् | २१ संभाराननुव्यूहति. आ. श्रौ. ५।१०।१ |
| २२ वानस्पत्यसंभारसंसर्जनम् | २२ वानस्पत्यान्संसृजे. आ. श्रौ. ५।१०।२ |
| २३ संभारविभागः | २३ सिकतावद्विभागं कुर्यात् आ. श्रौ. सू. ५ । १० । २ । |
| २४ संभारनिवपनम् | २४ निवपति आ. श्रौ. सू. ५।१०।२ |
| २५ हिरण्यनिवपनम् | २५ यद्धिरण्यमुपास्यति तै. ब्रा. १।१।३ |
| २६ हिरण्याभिमन्त्रणम् | २६ उपास्तमभिमन्त्रयते आ. श्रौ. सू. ५ । १० । ४ । |
| २७ रजतप्रदानम् | २७ रजतं प्रयच्छति । |
| २८ अपामुपस्पर्शनम् | २८ निरसनं कृत्वाऽप उ. आप. प. सू. २।९ |
| २९ मन्थनदेशः | २९ अपोद्दृह्य भस्माग्निं मन्थतिति तै. ब्रा १।१।९ |
| ३० अरणिस्थापनम् | ३० दशहोत्राऽरणिमवद० तै. ब्रा. २।२।१ |
| ३१ अश्वस्थितिः | ३१ उपतिष्ठत्यश्वे आ. श्रौ. ५।१०।९ |
| ३२ अश्वलक्षणम् | ३२ श्वेतोऽश्वो विक्लिन्नाक्षो भवति रोहितो वा सितजानुरपि वा य एव कश्चित्स्यादृः आ. श्रौ. सू. ५।१०।१० |
| ३३ अग्निमन्थनम् | ३३ अग्निं मन्थति तै. ब्रा. १।१।९। |
| ३४ सामगानम् | ३४ साम गायतिआ. श्रौ. ५।१०।११ |
| ३५ अग्नेरभिमन्त्रणम् | ३५ अभिमन्त्रयतेआ. श्रौ. ५।१०।१५ |

| | विषयानुक्रमणिका । | विधिवाक्यानि । |
|---|---|---|
| ३६ | चतुर्होतृवाचनम् | ३६ चतुर्होतॄन्यजमानं वाचयति आ. श्रौ. सू. ५ । ११ । १ |
| ३७ | जाताग्नेरभिमन्त्रणम् | ३७ जातमभिम० आ. श्रौ. ५।११।२। |
| ३८ | वरदानम् | ३८ वरं ददाति आ. श्रौ. ५।११।३। |
| ३९ | अभिप्राणनम् | ३९ अभिप्राणिति आ. श्रौ. ५।११।५ |
| ४० | अभिग्रहणम् | ४० अभिगृह्य आ. श्रौ. ५।११।६ |
| ४१ | उपसमिन्धनम् | ४१ उपसमिध्य आ. श्रौ. ५।११।६ |
| ४२ | प्रागुद्धरणम् | ४२ प्राञ्चमुद्धृत्य आ. श्रौ. ५।११।६ |
| ४३ | गार्हपत्याधानम् | ४३ निदधाति आ. श्रौ. सू. ५।१२।१ |
| ४४ | आधानकाले सामगानादि | ४४ रथंतरे गीयमाने यज्ञायज्ञीये च मध्य-ध्यांधानेन प्रथमया व्याहृत्या द्वाभ्यां वा प्रथमाभ्यां च सर्पराज्ञीभ्यां प्रथमेन च घर्मशिरसा। घर्मः शिर इति गार्हपत्यमादधाति। रथंतरमभिगायते गार्हपत्य आधीयमाने तै.ब्रा. १।१।८ त्रिभिरक्षरैर्गार्हपत्यमादधाति तै. ब्रा. १ । १ । ५ । |
| ४५ | अभिमन्त्रणम् | ४५ आधीयमानमभिमन्त्रयते आ. श्रौ. सू. ५ । १२ । ३ । |
| ४६ | वाचनम् | ४६ वाचयति आ. श्रौ. ५।१२।६ |
| ४७ | अग्न्युपस्पर्शनम् | ४७ नाग्निमुपस्पृशति आ. श्रौ. ५।१६।२ |
| ४८ | आज्यौषधिहोमः ( शमनहोमः ) | ४८ आज्यमौषधीश्च जुहोति आ. श्रौ. सू. ५ । १६ । ४ । |
| ४९ | आहवनीयाधानम् | ४९ अर्धोदिते सूर्य आहवनीयमादधाति तै. ब्रा. १ । १ । ४ । |
| ५० | इध्मादीपनम् | ५० इध्ममादीपयति आ. श्रौ. ५।१३।१। |
| ५१ | सिकताग्रहणम् | ५१ सिकताश्चोपयमनीरुपकल्पयते आ. श्रौ. सू. ५ । १३ । ३ । |
| ५२ | अग्न्युद्यच्छनम् | ५२ अग्निमुद्गृह्णीयात् तै. ब्रा. १।१।५। |
| ५३ | अग्नेर्धारणम् | ५३ उपयतं धारयति आ. श्रौ. ५।१३।६। |
| ५४ | वाचनम् | ५४ वाचयति आ. श्रौ. ५।१३।७। |

| विषयानुक्रमणिका । | विधिवाक्यानि । |
|---|---|
| ५५ दक्षिणाग्नेराधानम् | ५५ दक्षिणमग्निमादधाति आ. श्रौ. सू. ५ । १३ । ८ । |
| ५६ सामगानादि | ५६ यज्ञायज्ञीये गीयमाने यथर्ष्याधानेन द्वितीयया व्याहृत्या तिसृभिः सर्पराज्ञीभिः द्वितीयेन च घर्मशिरसा आ. श्रौ. ५। १३।८ । वातः प्राण इत्यन्वाहार्यपचनम् तै. ब्रा. १ । १।८। |
| ५७ अग्न्यनुपस्पर्शनं शमनहोमश्च | ५७ विधिः पूर्ववत् । |
| ५८ सामगानम् | ५८ वामदेव्यमभिगायते । तै. ब्रा. १।१।८ |
| ५९ साश्वाभिप्रव्रजनम् | ५९अभिप्रव्रजन्ति आ. श्रौ. ५।१४।५। |
| ६० रथचक्रपरिवर्तनम् | ६० रथचक्रं प्रवर्तयति । तै. ब्रा. १।१।६ |
| ६१ अग्निनयनम् | ६१ इयत्यग्रे हरति तै. ब्रा. १ । १।५ |
| ६२ अन्तरागमनप्रतिषेधः | ६२ नाग्निमादित्यं च व्यवेयात् । आ. श्रौ. सू. ५ । १४ । १० । |
| | ६३ दक्षिणतः आ. श्रौ. ५।१४।१। |
| ६३ पार्श्वनियमनम् | ६४ वरं ददाति आ. श्रौ. ५।१४।१२। |
| ६४ वरदानम् | ६५हिरण्यं निधाय आ.श्रौ.५।१४।१३। |
| ६५ हिरण्यनिधानम् | ६६ अतिक्रामति आ. श्रौ.५।१४।१३। |
| ६६ हिरण्यातिक्रमणम् | ६७ पार्श्वेत आक्रमयेत् । तै. ब्रा.१।१।५ |
| ६७ अश्वस्य संभाराक्रमणम् | ६८ आवर्तयित्वा आ. श्रौ.५।१४।१५ |
| ६८ अश्वस्य प्रदक्षिणावर्तनम् | ६९ पुनरावर्तयति तै. ब्रा. १ । १ । ५ |
| ६९ अश्वस्य पुनराक्रमणम् | ७० अश्वं धारयति आ.श्रौ.५।१५।१६ |
| ७० अश्वधारणम् | ७१पूर्ववाडश्वो भवतिआ.श्रौ.५।१४।१७ |
| ७१ अश्ववयोविधानम् | ७२ यजमानः शिवा जपति आ. श्रौ. सू. ५ । १५।२ । |
| ७२ जपः | ७३ अभिमन्त्र्य । आ. श्रौ. ५।१५।५। |
| ७३ अग्न्यभिमन्त्रणम् | ७४ बृहति गीयमाने श्यैतवारवन्तीययोर्यज्ञायज्ञीये च यथर्ष्याधानेन सर्वाभिर्व्याहृतिभिः सर्वाभिः सर्पराज्ञीभिस्तृतीयेन च घर्मशिरसा संभारेषु निदधाति आ. श्रौ. ५।१५।६बृहदभिगायते। यद्वारवन्तीयम- |
| ७४ आहवनीयाधानम् | |

| विषयानुक्रमणिका । | विधिवाक्यानि । |
|---|---|
| | भिगायते श्यैतेन श्येती कुरुते । अर्कश्चक्षु-रित्याहवनीयं तै. ब्रा. १ । १ । ८ । पश्चामिराहवनीयम् । तै. ब्रा. १।१।५। |
| ७५ अभिमन्त्रणम् | ७५ अभिमन्त्रयते । आ. श्रौ. ५।१६।१ |
| ७६ अनुवर्तनम् | ७६ सर्वेष्वाधानेषु यजमानोऽनुवर्तयते येन येनाऽऽदधाति आ. श्रौ. सू. ५।१६।२। |
| ७७ आज्यौषधिहोमः | ७७ आज्यौषधीश्च जुहोति आ. श्रौ. सू. ५। १६। ४। |
| ७८ समिदाधानम् | ७८ समिध आदधाति आ. श्रौ. सू. ५। १७।२।आश्वत्थ्यः समिध आदधाति ५। १७।२ । आश्वत्थीः शमीमय्यः समिध आदधाति ५ । १७ । ४। शमीमयीः । औदुम्बरीमादधाति वैकङ्कतीमादधाति शमीमयीमादधाति तै. सं. ५।४।७। |
| ७९ प्राजापत्यहोमः | ७९ प्रजापतिं मनसा ध्यायञ्जुहोति आ. श्रौ. सू. ५ । १७ । ७ । |
| ८० द्वेष्याय प्रेषणम् | ८० द्वेष्याय प्रहिणोति आ. श्रौ. ५।१७।८ |
| ८१ पूर्णाहुतिहोमः | ८१ पूर्णाहुतिं जुहोति आ. श्रौ. ५।१८।१। |
| ८२ वरदानम् | ८२ वरं दत्त्वा । |
| ८३ जपः | ८३ शिवा जपति आ. श्रौ. ५।१८।१। |
| ८४ प्रायश्चित्तहोमः | ८४ प्रायश्चित्तं विष्वपराधे विधीयते आ. श्रौ. सू. ९ । १ । १। |
| ८५ व्रतसंकल्पः | ८५ व्रतानि संकल्पयति आ. श्रौ. ५।५।२ |
| ८६ होमः | ८६ जुहोति । आ. श्रौ. ५।१८।२ |
| ८७ उपस्थानम् | ८७ उपतिष्ठते आ. श्रौ. सू. ५।१८।१ |
| ८८ आज्याहुतयः | ८८ आज्याहुतीर्हुत्वा आ. श्रौ. ५।२१।५ |
| ८९ अजस्रधारणम् | ८९ आधानाद्द्वादशरात्रमजस्राः आ. श्रौ. सू. २ । १ । ३५ । |
| ९० दशहोतृहोमः | ९० दशहोतारं हुत्वा आ. श्रौ. ५।२२।२० |

| विषयानुक्रमणिका । | विधिवाक्यानि । |
|---|---|
| ९१ अग्निहोत्रहोमः | ९१ अग्निहोत्रं जुहोति |
| ९२ दक्षिणादानम् | ९२ दक्षिणा ददाति ५ । २३।१। |
| ९३ होमानुष्ठानम् | ९३ एतौ होमौ पुरस्ताज्जुहुयात् तै. सं. ३ । ५ । १ |
| ९४ अन्वारम्भणीयेष्ट्यनुष्ठानम् | ९४ अन्वारम्भणीयामिष्टिं निर्वपति आ. श्रौ. सू. ५ । २३ । ४ । |
| ९५ दक्षिणादानम् | ९५ मिथुनौ गावौ दक्षिणा समृद्ध्यै तै. सं. ३ । ५ । १ । |
| ९६ चतुर्होतृहोमः | ९६ चतुर्होतारं जुहुयात्तै. ब्रा. २।२।२ |
| ९७ दर्शपूर्णमासारम्भः | ९७दर्शपूर्णमासावार० आ. श्रौ५।२२।७ |
| ९८ पौर्णमासयागः | ९८पौर्णमासेन यजते आ. श्रौ. ५।२५।१ |

इति सविधि[वाक्यं]आधानविषयानुक्रमणम् ॥



चतुर्दश्यां प्रातरनुष्ठेयं कर्मजातम् ।

१ आधानसंकल्पः । दर्भेष्वासीनः सपत्नीको यजमानः पवित्रपाणिराचम्य 'ममोपात्तदुरितक्षयद्वारा परमेश्वरप्रीत्यर्थमग्नीनाधास्ये' ।

२ ऋत्विग्वरणम् । यजमानः—'अस्मिन्नाधाने चन्द्रमा मे ब्रह्मा स मे ब्रह्मा ब्रह्माणं त्वा वृणे' ।

ब्रह्मा—'महन्मे वोचो भर्गो मे वोचो भगो मे वोचो यशो मे वोचः स्तोमं मे वोचः क्लृप्तिं मे वोचस्तृप्तिं मे वोचो भुक्तिं मे वोचः सर्वं मे वोचः । चन्द्रमास्ते ब्रह्मा स ते ब्रह्मा ब्रह्मा ... अहं ते मानुषः' ।

यजमानः—'अस्मिन्नाधाने अग्निर्मे होता स मे होता होतारं त्वा वृणे' । होता—'महन्मे वोचो भर्गो मे वोचः' इत्यादि । 'अग्निष्टे होता स ते होता होता ... अहं ते मानुषः' ।

यजमानः—'अस्मिन्नाधाने आदित्यो मेऽध्वर्युः स मेऽध्वर्युरध्वर्युं त्वा वृणे' । अध्वर्युः—'महन्मे वोचो भर्गो मे वोचः' इत्यादि । आदित्यस्तेऽध्वर्युः स तेऽध्वर्युरध्वर्युः ... अहं ते मानुषः' ।

['त्वा' इत्यस्याग्रे यजमानो ब्रह्मप्रभृतीनां नाम वदेत् ।
...इत्थमङ्किते चिह्ने ब्रह्मप्रभृतयः स्वं स्वं नाम वदेयुः] ।

यजमानः—'अस्मिन्नाधाने आग्नीध्रं त्वा वृणे' ।

३ मधुपर्काहरणम् । यजमानः—'आधानाङ्गभूतमृत्विग्भ्यो मधुपर्कमाहरिष्ये' इति संकल्प्याऽऽसनं दद्यात् । विष्टरो विष्टरो विष्टर इति त्रिर्निवेद्याऽऽसनार्थमृत्विग्हस्ते विष्टरं दद्यात् । ऋत्विक्—

'अहं वर्ष्म सजातानां विद्युतामिव सूर्यः ।
इदं तमधितिष्ठामि यो मा कश्चाभिदासति' ॥ १ ॥

इत्यनेनाग्रे विष्टर उपविशेत् । ततोऽर्चकेन पाद्यं पाद्यं पाद्यमिति त्रिर्निवेदितं पाद्यमृत्विग्गृह्णीयात् । ततोऽर्चकस्तेनोदकेनर्त्विजो दक्षिणसव्यपादौ क्रमेण क्षालयेत् । तत ऋत्विक् पूर्ववत्त्रिर्निवेदितमर्घ्यमञ्जलिना प्रतिगृह्याऽऽचमनीयेनान्वाचामति । तत्र मन्त्रः—

'अमृतोपस्तरणमसि' ॥ २ ॥

तत आह्रियमाणं मधुपर्कमीक्षते । तत्र मन्त्रः—

'मित्रस्य त्वा चक्षुषा प्रतीक्षे' ॥ ३ ॥

ततो मधुपर्को मधुपर्को मधुपर्क इति त्रिर्दात्रा निवेदितं मधुपर्कं 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि' ॥४॥ इत्यञ्जलिना प्रतिगृह्य मधु वाता इति तृचेनावेक्षेत—

'मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः ॥५॥
मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः ।
मधु द्यौरस्तु नः पिता ॥ ६ ॥
मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः' ॥ ७ ॥

इत्यवेक्ष्यानामिकया चाङ्गुष्ठेन च त्रिः प्रदक्षिणमालोड्य-

'वसवस्त्वा गायत्रेण च्छदसा भक्षयन्तु' ॥ ८ ॥

इति पुरस्तान्निमार्ष्टि । एवं—

'रुद्रास्त्वा त्रैष्टुभेन च्छन्दसा भक्षयन्तु' ॥ ९ ॥

इति दक्षिणतो निमार्ष्टि ।

'आदित्यास्त्वा जागतेन च्छन्दसा भक्षयन्तु' ॥ १० ॥

इति पश्चान्निमार्ष्टि ।

'विश्वे त्वा देवा आनुष्टुभेन च्छन्दसा भक्षयन्तु' ॥ ११ ॥

इत्युत्तरतः । ततो मध्यात्त्रिर्गृहीत्वा त्रिरूर्ध्वं निक्षिपेत् । तत्र मन्त्रः—

'भूतेभ्यस्त्वा' इति ॥ १२ ॥

ततो मधुपर्कप्राशनम् । तत्र मन्त्राः—

'विराजो दोहोऽसि ॥ १३ ॥

इति प्रथमं प्राश्नीयात् ।

'विराजो दोहमशीय' ॥ १४ ॥ इति द्वितीयम् ।

'मयि दोहः पद्यायै विराजः' ॥ १५ ॥ इति तृतीयम् ।

अथाऽऽचमनीयेनान्वाचामति—

'अमृतापिधानमसि' ॥ १६ ॥ इति ।

'सत्यं यशः श्रीर्मयि श्रीः श्रयताम्' ॥ १७ ॥ इति द्वितीयमाचमनम् ।

ततो दाताऽऽचान्तोदकाय गौर्गौर्गौरिति निवेदितां गां—

'माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः ।
प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट' ॥ १८ ॥

इति जपित्वा 'ॐ उत्सृजत' इति ब्रूयात्। ततो गां निवेद्य ऋत्विग्भ्यो भोजनमपि दत्त्वाऽऽचम्य 'अनेन मधुपर्काख्येन कृतेन कर्मणा परमेश्वरः प्रीयताम्'।

सामग्री—

(१) विष्टर आसनमुपवेशनार्थम्। (२) जलं पाद्यार्घ्यमर्घ्यार्थमाचमनीयार्थं च। (३) मधुपर्को भक्षणार्थं प्रतिदिशं निक्षेपार्थं च। (४) गौर्ऋत्विग्भ्यो निवेदनार्थम्। (५) भोजनं च तेभ्यः।

ऋत्विजां मधुपर्कदाने द्वे गती संभवतः—पदार्थानुसमयः काण्डानुसमय इति। अत्र पदार्थानुसमयो नाम सर्वेषां वरणक्रमेण विष्टरं दत्त्वा ततः पाद्यं ततोऽर्घ्यमिति। काण्डानुसमयो नामैकस्यैव विष्टरादिगोनिवेदनान्तं समाप्य ततोऽन्यस्य ततोऽन्यस्येति। (ऋत्विग्वरणादि मधुपर्कान्तं कर्माऽऽश्वलायनगृह्ये १।२३–२४)।

४ अरण्याहरणम्। अध्वर्युः—

'यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा।

तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सह' (तै० ब्रा० १।२।१।२१)।

अत्राऽऽश्वलायनश्रौतसूत्राध्यायिना यजमानेनाप्यरण्याहरणं कार्यम्।

'अश्वत्थाच्छमीगर्भादरणी आहरेदनवेक्षमाणः' (आ० श्रौ० २।१।१६)। इति सूत्रात्। अत्र वृत्तिकारः—'अध्वर्युणाऽऽरण्याहरणे क्रियमाणे तेन सह यजमानोऽप्यनेन मन्त्रेणाऽऽहरेत्'। तदा मन्त्रे—'स्वं त्वा हरामि' एतावान् भेदः। शेषं समानम्।

५ अरण्यभिमन्त्रणम्[1]। अध्वर्युः सर्वाणि यज्ञपात्राण्यप्यत्राभिमृशेत्केतुभिः सहेतिमन्त्रलिङ्गात्।

'अश्वत्थाद्धव्यवाहाद्धि जातामग्नेस्तनूं यज्ञियाꣳ संभरामि।

शान्तयोनिꣳ शमीगर्भमग्नये प्रजनयितवे।

आयुर्मयि धेह्यायुर्यजमाने (तै० ब्रा० १।२।१।२०)।

६ पार्थिवसंभाराहरणम्। अध्वर्युः—औपानसदेशे—

१ 'वैश्वानरस्य रूपं पृथिव्यां परिस्रुता।

स्योना मा विशन्तु नः' (तै० ब्रा० १।२।१) इति सिकताः।

---

१ अभिमन्त्रणं नाम मन्त्रोच्चारणकाले तदर्थस्य संस्मरणम्।
मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्।
शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्।
एतदेवाभिमन्त्रणस्य लक्षणं चेक्षणाधिकम् (आश्व० श्रौ० वृत्तिः १।१।२१)।

२ 'यदिदं दिवो यददः पृथिव्याः संजज्ञाने रोदसी संबभूवतुः ।
ऊषान्कृष्णमवतु कृष्णमूषा इहोभयोर्यज्ञियमागमिष्ठाः '(तै० ब्रा० १ ।
२ । १ । ४ ) इत्यूषान् ।
३ 'ऊतीः कुर्वाणो यत्पृथिवीमचरो गुहाकारमाखुरूपं प्रतीत्य ।
तत्ते न्यक्तमिह संभरन्तः शतं जीवेम शरदः सवीराः ' ।
( तै० ब्रा० १ । २ । १ । ५ ) इत्याखुकरीषम् ।
४ 'ऊर्जं पृथिव्या रसमाभरन्तः शतं जीवेम शरदः पुरूचीः ।
वम्रीभिरनुवित्तं गुहासु श्रोत्रं त उर्व्यबधिरा भवामः ' ( तै० ब्रा०
१ । २ । १ । ६ ) इति वल्मीकवपाम् ।
५ ' प्रजापतिसृष्टानां प्रजानां क्षुधोपहत्यै सुवितं नो अस्तु ।
उपप्रभिन्नमिषमूर्जं प्रजाभ्यः सूदं गृहेभ्यो रसमाभरामि ' ( तै० ब्रा०
१ । २ । १ । ७ ) इति सूदम् ।
६ ' यस्य रूपं बिभ्रदिमामविन्दद्गुहा प्रविष्टाꣳ सरिरस्य मध्ये ।
तस्येदं विहतमाभरन्तोऽच्छम्बट्कारमस्यां विधेम ' ( तै० ब्रा० १ ।
२ । १ । ८ ) इति वराहविहतम् ।
७ ' याभिरदृꣳहज्जगतः प्रतिष्ठामुर्वीमिमां विश्वजनस्य भर्त्रीम् ।
ता नः शिवाः शर्कराः सन्तु सर्वाः ' ( तै० ब्रा० १ । २ । १ ।
१० ) इति शर्कराः ।
८ 'अग्ने रेतश्चन्द्रꣳ हिरण्यमद्भ्यः संभूतममृतं प्रजासु ।
तत्संभरन्नुत्तरतो निधायातिप्रयच्छन्दुरितिं तरेयम '( तै० ब्रा० १ ।
२ । १ । ११ ) इति हिरण्यम् ॥ १० ॥

इध्माय रजतं प्रयच्छतीत्यग्रे वक्ष्यमाणत्वादत्र रजतस्य शकलद्वयात्मकः संग्रहः कार्यः । सुवर्णस्यापि तावानेव । इति पार्थिवाः संभाराः ।

७ अथ वानस्पत्यसंभाराहरणम् । अध्वर्युः—

१ 'अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठः संवत्सरं देवेभ्यो निलाय ।
तत्ते न्यक्तमिह संभरन्तः शतं जीवेम शरदः सवीराः ' ( तै० ब्रा०
१ । २ । १ । १२) इत्यश्वत्थम् ॥ ११ ॥

२ 'ऊर्जः पृथिव्या अध्युत्थितोऽसि वनस्पते शतवल्शो विरोह ।
त्वया वयमिषमूर्जं मदन्तो रायस्पोषेण समिषा मदेम'( तै०ब्रा० १।२।
१ । १३ ) इत्युदुम्बरम् ॥१२॥
३ 'गायत्रिया ह्रियमाणस्य यत्ते पर्णमपतत्तृतीयस्यै दिवोऽधि ।
सोऽयं पर्णः सोमपर्णाद्धि जातस्ततो हरामि सोमपीथस्यावरुद्ध्यै ॥
देवानां ब्रह्मवादं वदतां यदुपाशृणोः सुश्रवा वै श्रुतोऽसि ।
ततो मामाविशतु ब्रह्मवर्चसं तत्संभरंस्तदवरुन्धीय साक्षात्' ( तै०ब्रा०
१ । २ । १।१४-१५) इति पर्णम् ॥१३॥
४ 'यया ते सृष्टस्याग्नेर्हेतिमशमयत्प्रजापतिः ।
तामिमामप्रदाहाय शमीं शान्त्यै हराम्यहम्'(तै०ब्रा० १।२।१।१६)।
इति शमीम् ॥१४॥
५ 'यत्ते सृष्टस्य यतो विकङ्कतं भा आर्छज्जातवेदः ।
तया भासा संमित उरुं नो लोकमनुप्रभाहि' ( तै०ब्रा०१।२।१।१७ )
इति वैकङ्कतम् ॥१५॥
६ 'यत्ते तान्तस्य हृदयमाच्छिन्दञ्जातवेदो मरुतोऽद्भिस्तमयित्वा ।
एतत्ते तदशनेः संभरामि सात्मा अग्ने सहृदयो भवेह'( तै०ब्रा०१।२।१।
१८ ) इत्यशनिहतवृक्षशकलानि त्वचो वा ॥१६॥
७ 'यत्पर्यपश्यत्सरिरस्य मध्ये उर्वीमपश्यज्जगतः प्रतिष्ठाम् ।
तत्पुष्करस्यायतनाद्धि जातं पर्णं पृथिव्याः प्रथनं हरामि'( तै०ब्रा०
१।२।१।१९ ) इति पुष्करपर्णम् ॥१७॥
८ संभारनिधानम् । अध्वर्युः संभारानाहृत्य तूष्णीं संभारानेकस्मिन्पात्रे संभृतान्कृत्वोपासनदेशे निदध्यात् । तत्र मन्त्रः—
१ 'यं त्वा समभरं जातवेदो यथाशरीरं भूतेषु न्यक्तम् ।
स संभृतः सीद शिवः प्रजाभ्य उरुं नो लोकमनुनेषि विद्वान्'( तै०
ब्रा० १ । २ । १ । २२ ) ॥१८॥

९ उदवासनम्। गृह्याग्निगृहाद्विहारदेशे गमनम्। तद्यथा—

यजमानः श्वासानिरोधं कृत्वा गृह्याग्निं गृहीत्वा गृहीतसंभारेणाध्वर्युणा सह विहारदेशं गच्छेत्।

१० अग्निप्रतिष्ठापनम्। इषुमात्रावरं सर्वतः स्थण्डिलमुपलिप्योल्लिख्य षड्लेखा उदगायतां पश्चात्प्रागायते नानान्तयोस्तिस्रो मध्ये तदभ्युक्ष्याग्निं प्रतिष्ठापयेत् [ आश्व० गृह्य० १। ३। १ ]।

११ देवयजनोद्धननम्। अध्वर्युर्यज्ञियकाष्ठमादाय प्राचीनप्रवणमुद्धन्यात् (आप० श्रौ० ५। ४। १)।

'उद्धन्यमानमस्या अमेध्यमपपाप्मानं यजमानस्य हन्तु।

शिवा नः सन्तु प्रदिशश्चतस्रः शं नो माता पृथिवी तोकसाता'(तै० ब्रा० १। २। १। १] ॥१९॥

१२ देवयजनावोक्षणम्। अध्वर्युः—

'शं नो देवीरभिष्टय आपो भवन्तु पीतये।

शंयोरभिस्रवन्तु नः' (तै. ब्रा. १। २। १। २)इत्यद्भिरवोक्ष्य।

१३ शरणकरणम्। तस्मिन्नुदीचीनवंशं शरणं करोति(आप०श्रौ०५।४।१)।

१४ अग्न्यायतनम्। अध्वर्युः शरणस्याग्रेण मध्यमं वंशं गार्हपत्यायतनं तस्मात्प्राचीनमष्टासु प्रक्रमेषु ब्राह्मणस्याऽऽहवनीयायतनं दक्षिणतः पुरस्ताद्वितृतीयदेशे गार्हपत्यस्य नेदीयसि दक्षिणाग्नेरायतनं कुर्यात् (आप० श्रौ० ५। ४। २। ५)।

१५ 'वपनस्नाने यजमानः केशश्मश्रु वपते नखानि निकृन्तते स्नाति। एवं पत्नी केशवर्जम्' (आप० श्रौ० ५। ४। ९)।

१६ 'क्षौमवस्त्रधारणं जायापत्योः' (आप० श्रौ० ५। ४। १०)।

१७ ब्राह्मौदनिकाग्नेराधानम्। 'अध्वर्युरपराह्णेऽधिवृक्षसूर्ये वा गृह्याग्नेरर्धमाहृत्यापरेण गार्हपत्यं स्थण्डिलं कृत्वा तिस्रस्तिस्रो लेखा लिखित्वाऽद्भिरवोक्ष्याग्निं प्रतिष्ठापयेत्' (आप० श्रौ० ५। ४। १२)।

१८ समित्संपादनम्। अग्रे सूत्रकारेण विनियोगस्य वक्ष्यमाणत्वाद्येन केनापि कार्यम्। तद्यथा—

चित्रियाः समिधास्तिस्र आश्वत्थ्यो नव एव च।
शमीमय्यो द्वादश स्युरौदुम्बरसमित्त्रयी
वैकङ्कत्यस्तथा तिस्रः शुष्काहो माहृतां ।गताः॥

चित्रियास्तु समिध आर्द्राः सपलाशाः प्रादेशमात्र्यः स्तिभिगवत्यः [ स्तिभिगवत्यः फलवत्यः ] इतरा अपि प्रादेशमात्र्यः (आप॰श्रौ॰५।५।१०)।

१९ जायापत्योर्हविष्यान्नभोजनं सर्पिर्मिश्रस्य पयोमिश्रस्य।

२० सायं गृह्यहोमः। यजमान आचम्य 'ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायं गृह्यं परिचरिष्यामि'।

'अग्नये स्वाहा। अग्नय इदं न मम।

प्रजापतये स्वाहा प्रजापतय इदं न मम'।

आचम्य 'अनेन गृह्यपरिचरणेन परमेश्वरः प्रीयताम्'।

२१ ब्रह्मौदननिर्वापः। 'अध्वर्युरपरेण ब्राह्मौदनिकं पाजके निशायां ब्रह्मौदनं चतुःशरावं निर्वपेत्' (आप॰ श्रौ॰ ५। ५। १)। मन्त्राः–

'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां

ब्रह्मणे प्राणाय जुष्टं निर्वपामि ॥२१॥

देवस्य त्वा॰ हस्ताभ्यां ब्रह्मणेऽपानाय जुष्टं निर्वपामि।

देवस्य त्वा॰ हस्ताभ्यां ब्रह्मणे व्यानाय जुष्टं निर्वपामि।

देवस्य त्वा॰ हस्ताभ्यां ब्रह्मणे जुष्टं निर्वपामि' (आप॰ श्रौ॰ ५। ५।२)।

(पाजकं वैदलं महानसोपकरणम्)।

२२ ब्रह्मौदनपचनम्। 'अध्वर्युः कश्चन कुशलो वा चत्वार्युदपात्राणि स्थाल्यामासिच्य श्रपयति। तण्डुलान्न प्रक्षालयेन्न प्रस्रावयेत्। जीवतण्डुलमिव श्रपयेत्' (आप॰ श्रौ॰ ५। ५। ४। ७)।

२३ ब्रह्मौदनाग्नौ होमः। 'अध्वर्युरुदगुद्वास्योपस्तरणाभिघारणवर्जं दर्व्या ब्रह्मौदनादुद्धृत्य जुहुयात्' (आप॰ श्रौ॰ ५ ५। ८)।

'प्र वेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे।

यतो भयमभयं तन्नो अस्त्वव देवान्यजे हेड्यान्स्वाहा' (तै॰ ब्रा॰ १। २। १। २३)।

यजमानः 'प्र वेधस इदं न मम'। २२

२४ 'ब्रह्मौदनस्य पृथक्पात्रेषु निक्षेपः। यजमानश्चतुर्धा ब्रह्मौदनं व्युद्धृत्य प्रभूतेन सर्पिषोपसिच्य स्थाल्यां शेषं निधत्ते' (आप॰ श्रौ॰ ५। ५। ९)।

२५ ऋत्विग्भ्यो ब्रह्मौदनम्। 'यजमानोऽध्वर्यवे होत्रे ब्रह्मणेऽग्नीधे च प्रयच्छेत्। ते च हस्तेन गृहीतपिण्डा भूतवानाश्च भवेयुः' (आप॰श्रौ॰५।५।९)।

२६ समिद्विवर्तनम् 'अध्वर्युर्वामहस्तेन पात्रं गृहीत्वा पिण्डहस्तेनैव ब्रह्मौदनशेषं संकृष्य तस्मिन्नाज्यशेषमानीय तस्मिंश्चित्रियस्याश्वत्थस्य तिस्रः सपलाशा आर्द्राः प्रादेशमात्रीः फलवतीः समिधो विवर्तयेत्'(आप० श्रौ० ५।५।१०)।

१ 'चित्रियादश्वत्थात्संभृता बृहत्यः शरीरमभिसꣳस्कृताः स्थ ।

प्रजापतिना यज्ञमुखेन संमितास्तिस्रस्त्रिवृद्भिर्मिथुनाः प्रजात्यै' ( तै. ब्रा. १ । २ । १ । १९ ॥२३॥

२७ समिदाधानम् । अध्वर्युः समिध आदध्यात्—

१ 'समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् ।

आस्मिन्हव्या जुहोतन स्वाहा ' ( तै० ब्रा० १ । २ । १।२४) ॥

यजमानः—'अग्नय इदं न मम ' ॥ २४ ॥

२ 'उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत ।

जुषस्व समिधो मम स्वाहा' ( तथैव २५ ) ॥

यजमानः—'अग्नय इदं न मम ' ॥ २५ ॥

३ 'तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि ।

बृहच्छोचा यविष्ठ्य स्वाहा' ( तथैव २६ ) ॥

यजमानः—'अग्नय इदं न मम ' ॥ २६ ॥

२८ वत्सतरीदानम् । यजमानः—'अध्वर्यो वत्सतरीं त्रयनिष्कमथवा धाय त दास्य ' ( आप० श्रौ० ५ । ७ । १ )

अत्र तूष्णीं प्रतिग्रहः । [ वत्सतरी स्तनपानोपरता ] ।

२९ ब्रह्मौदनप्राशनम् । 'तं ऋत्विजो ब्राह्मणा ब्रह्मौदनं प्राश्नीयुः'(आप० श्रौ० ५ । ७ । २ ) ।

'पूर्वगृहीताः पिण्डाः प्रथमग्रासा भवन्ति' ( आप० श्रौ० ५।५।१० ) ।

३० वरदानम् । यजमानः—'ये प्राशितवन्तो ब्राह्मणाः समानवरानिष्कपद्व्यं वो दास्ये ' ( आप० श्रौ० ५ । ७ । ३ ) । पूर्ववत्तूष्णीमेव प्रतिग्रहः ।

३१ अध्वर्योर्व्रतचर्या । अध्वर्युः—'न मांसमश्नामि न स्त्रियमुपैमि' (आप० श्रौ० ५ । ७ । १६ ) ।

३२ अजबन्धनम् । 'अध्वर्युरन्तरेण गार्हपत्यायतनं कल्माषमजं बध्नीयात्' ( आप० श्रौ० ५ । ७ । १७ ) ।

१ 'प्रजा अग्ने संवासयाशाश्च पशुभिः सह ।

राष्ट्राण्यस्मा आधेहि यान्यासंन्त्सवितुः सवे' (तै०ब्रा० १।१।३३) ॥

३३ यजमानव्रतचर्या । यजमानः—'अनृतात्सत्यमुपैमि मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामि'। (तै० ब्रा० १।२।१।३८)।

३४ अग्निप्रज्वालनम्। 'आप्रातः (अरणीनिष्टपनपर्यन्तं)यथाऽग्निर्न शाम्येत्तथा प्रज्वालयेत्' [आप० श्रौ० ५।८।४]।

१ 'शल्कैरग्निमिन्धान उभौ लोकौ संनेमहम्।

उभयोर्लोकयोर्ऋद्ध्वातिमृत्युं तराम्यहम्' (तै०ब्रा० १।२।१।३९)।

॥ इति चतुर्दश्याम् आ उपव्युषं कर्म ॥

१ अरणीनिष्टपनम्। 'अध्वर्युस्तस्मिन् ब्रह्मौदनाग्ना अरणी निष्टपेत्'(आप. श्रौ. ५।८।५)।

१ 'जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्जनिष्यते।

अग्निमश्वत्थादधि हव्यवाहꣳ शमीगर्भाज्जनयन्यो मयोभूः' (तै. ब्रा. १।२।१।४०)।

२ 'अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः।

तं जानन्नग्न आरोहाथा नो वर्धया रयिम्' (तै.ब्रा.१।२।१।४१)॥

'उत्तरत्र भस्मापोह्य' (आप. श्रौ. ५।१०।७ इति सूत्रणाद्ब्रह्मौदनिकाग्निमनुगमयेत् (शामयेदित्यर्थः)।

२ अरण्यभिमन्त्रणम्। 'यजमानो निष्टप्ते अरणी अभिमन्त्रयेत्' (आप. श्रौ. ५।८।६)।

१ 'अग्नी रक्षाꣳसि सेधति शुक्रशोचिरमर्त्यः।

शुचिः पावक ईड्यः' (तै. ब्रा. २।४।१।३२)।

३ अरणीप्रतीक्षणम्। 'यजमान आह्रियमाणे अरणी प्रतीक्षेत' (आप.श्रौ.५।८।[illegible])।

१ 'मही विश्पत्नी सदने ऋतस्यार्वाची एतं धरुणे रयीणाम्।

अन्तर्वत्नी जन्यं जातवेदसमध्वराणां जनयथः पुरोगाम्' (तै. ब्रा. १।२।१।३४)।

४ अरणीप्रदानम्। 'अध्वर्युर्यजमानाय [अरणी]प्रयच्छेत्'।

१ 'होता च ते बुध्यभृच्चोर्वरी ते ते भागधेयं प्रयच्छामि' (आप. श्रौ. ५।[illegible]।७)।

५ अरणीप्रतिग्रहणम् 'यजमानोऽध्वर्युदत्ते अरणी हस्ताभ्यां गृह्णीयात्'(आपं. श्रौ. ५ । ८ । ८ ) ।

१ 'आरोहतं दशतꣳ शक्करीर्ममर्तेनाग्न आयुषा वर्चसा सह ।

ज्योग्जीवन्त उत्तरामुत्तराꣳ समां दर्शमहं पूर्णमासं यज्ञं यथा यजै'(तै. ब्रा. १ । २ । १ । ३५ ) ।

६ अरण्यभिमन्त्रणम् । 'यजमानः प्रतिगृह्याभिमन्त्रयेत्' (आप.श्रौ.५।८।८)।

१ 'ऋत्वियवतीस्थो अग्निरेतसौ गर्भं दधाथां ते वामहं ददे ।

तत्सत्यं यद्वीरं बिभृथो वीरं जनयिष्यथः ।

ते मत्प्रातः प्रजनिष्येथे ते मा प्रजाते प्रजनयिष्यथः ।

प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोके' ( तै.ब्रा. १।२।१।३६-३७)

अभिमन्त्रणमारभ्य यावन्मन्थनं हस्ते अरणी यजमानो धारयेत् ।

१ मन्त्रान्तेन प्रदानं स्यान्मन्त्रान्ते च प्रतिग्रहः ।

अरण्योर्युगपत्स्यातामध्वर्युयजमानयोः ॥

७ जपः । अध्वर्युयजमानौ जपतः । मन्त्राः—

१ 'मयि गृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ।

मयि प्रजां मयि वर्चो दधाम्यरिष्टाः स्याम तनुवा सुवीराः ॥३९॥

यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्याꣳ आविवेश ।

तमात्मन्परि गृह्णीमहे वयं मा सो अस्माꣳ अवहाय परागात्' ( तै. सं. ५ । ७ । ९ । १-२ ) ।

८ अग्न्यायतनोद्धननम् । अध्वर्युर्गार्हपत्याय(?) मुद्धन्यात् ।

१ 'अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः ।

अदादिदं यमो वसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै'( तै.ब्रा. १ । २ । १ । ४२ )।

९ अवोक्षणम् । 'अध्वर्युरद्भिरवोक्षेत्' ( आप. श्रौ. ५ । ९ । १ ) ।

१ 'शं नो देवी रभिष्टय आपो भवन्तु पीतये ।

शंयोरभिस्रवन्तु नः' ( तै. ब्रा. १ । २ । १ । २ ) ।

'एवमेव दक्षिणाग्नेराहवनीयस्य चोद्धननावोक्षणे कुर्यात्' (आप.श्रौ.५।९।२)।

१० 'अनुष्ठानेऽग्नीनामानन्तर्यम् । एवमेवानुपूर्व्याण्येवैष्वत ऊर्ध्वं कर्माणि कुर्यात्' ( आप. श्रौ. ५ । १ । ३ )

११ संभारविभागः । 'अध्वर्युः सिकतानामर्धं द्वेधं विभज्यार्धं गार्हपत्यायतने निवपत्यर्धं दक्षिणाग्नेरर्धमाहवनीयस्य । एतेनैव कल्पेन सर्वान्पार्थिवान्निवपति' ( आप. श्रौ. ५ । १ । ४–५ ) ।

१२ सिकतानिवपनम् । 'अध्वर्युः सिकता निवपेद्गार्हपत्यायतने' (आप. श्रौ. ५ । १ । ६ ) ।

१ 'अग्नेर्भस्मास्यग्नेः पुरीषमसि' ( तै० ब्रा० १ । २ । १ । ४३ ) ।

एतेनैव मन्त्रेण दक्षिणाग्निराहवनीयस्यायतने निवपेत् ।

१३ ऊषानिवपनम् । 'अध्वर्युरूषान्निवपेत्' ( आप. श्रौ० ५ । १ । ६ ) ।

१ 'संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात्' ( तै० ब्रा० १ । २ । १ । ४४ ) ।

१४ ध्यानम् । 'अध्वर्युर्मनसा ध्यायेत्तस्य प्रकारः ।

यददश्चन्द्रमसि कृष्णं तदिहास्तु' ( आप. श्रौ. ५ । १ । ७ ) ।

एवमूषनिवपनं ध्यानं च प्रत्यायतनं कार्यम् ।

१५ आखुकरीषनिवपनम् । 'अध्वर्युराखुकरीषं निवपेद्गार्हपत्ये' (आप. श्रौ. ५ । १ । ८ ) ।

१ 'उदेयग्ने अधिमातुः पृथिव्या विश आविश महतः सधस्थात् ।

आखुं त्वा ये दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपाम् ' ( आप. श्रौ. ५।१। ८ ) । एवं प्रत्यायतनम् ।

१६ वल्मीकवपानिवपनम् । 'अध्वर्युर्गार्हपत्यायतने वल्मीकवपां निवपेत् ' आप. श्रौ. ५ । १ । ८ ) ।

१ 'यत्पृथिव्या अनामृतः संबभूव त्वे सचा ।

तदग्निरग्नेय ददात्तस्मिन्नाधीयतामयम् ( आप. श्रौ० ५।१।८ ) ॥४६॥

[ दक्षिणाग्न्यायतने ] १ 'यदन्तरिक्षस्यानामृतः संबभूव त्वे सचा ।

तदग्निरग्नये ददात्तस्मिन्नाधीयतामयम्' ( आप. श्रौ. ५ । १ । ९ ) ।

[ आहवनीयायतने ] १ 'यद्दिवोऽनामृतः संबभूव त्वे सचा ।

तदग्निरग्नये ददात्तस्मिन्नाधीयतामयम्' ( आप. श्रौ. ५ । १ । ९ ) ।

१७ सूदनिवपनम् । अध्वर्युर्गार्हपत्यायतने सूदं निवपेत् ।

१ ‘ उत्स्थमुद्रान्मधुमा२ ऊर्मिरागात्साम्राज्याय प्रतरां दधानः ।
अमी च ये मघवानो वयं चेषमूर्जं मधुमत्संभरेम ’ ( आप. श्रौ.
५ । ९ । १० ) । एवं दक्षिणाग्न्याहवनीयायतनयोः ।

१८ वराहविहतनिवपनम् । ‘अध्वर्युर्वराहविहतां मृदं गार्हपत्यायतने निवपेत् ।
१ इयत्यग्र आसीः’ (आप. श्रौ० ५ । ९ । १० ) ।

एवमितरयोः पूर्ववत् ।

१९ शर्करानिवपनम् । ‘अध्वर्युः शर्करा गार्हपत्यायतने निवपेत् ।
‘ अदो देवी प्रथमाना पृथग्यद्देवैर्न्युप्ता व्यसर्पो महित्वा ।
अदृंहथाः शर्कराभिस्त्रिविष्टप्य(?) जयो लोकान्प्रदिशश्चतस्रः ’
( आप० श्रौ० ५ । ९ । ११ ) ।

२० द्वेष्यध्यानम् । ‘अध्वर्युर्यजमानं तद्द्वेष्यं पृष्ट्वा ध्यायेत् ’ ( आप० श्रौ० ५ । ९ । ११ ) । एवं शर्करानिवपनं तदुत्तरं द्वेष्यध्यानं च प्रत्यायतने कार्यम् । निवपनं तु पूर्ववत् ।

२१ संभारव्यूहनम् । ‘ अध्वर्युः प्रत्यायतनं संभारान्प्रथयेत् ’ ।
‘ ऋतः२स्तृणामि पुरीषं पृथिव्यामृतेऽध्यग्निमादधे सत्येऽध्यग्निमादधे ’ [ आप० श्रौ० ५ । १० । १ ] ।

२२ वानस्पत्यसंभारसंसर्जनम् । ‘अध्वर्युर्वानस्पत्यान्संसृजति [आप०श्रौ० ५ । १० । २ ] ।
‘ सं या वः प्रियास्तनुवः सं प्रिया हृदयानि वः ।
आत्मा वो अस्तु संप्रियः संप्रियास्तनुवो मम ’ [ तै०ब्रा० १ । २ । १ । ४६ ] ।
‘सं वः सृजामि हृदयानि सꣳसृष्टं मनो अस्तु वः ।
सꣳसृष्टः प्राणो अस्तु वः ’ [ तै० ब्रा० १ । २ । १ । ४५ ] ।

२३ संभारविभागः । ‘अध्वर्युः सिकतावद्विभजति’ ।

२४ संभारनिवपनम् । ‘अध्वर्युः प्रत्यायतनं वानस्पत्यान्निवपेत् ’ [आप० श्रौ० ५ । १० । २ ] ।
‘ इतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि जातवेदाः ।
स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्’
[ तै० ब्रा० १ । ४ । ४ ] ।

२५ हिरण्यनिवपनम्। अध्वर्युर्गार्हपत्यायतने सौवर्णं हिरण्यशकलमुत्तरतः संभारेषूपास्येत्।

'यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्षे दिवि याः पृथिव्याम्।
ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने' ( आप० श्रौ० ४। १०। ३ )।

२६ हिरण्याभिमन्त्रणम्। 'अध्वर्युरुपास्तं हिरण्यमभिमन्त्रयेत्'।

१ 'चन्द्रमाग्निं चन्द्ररथं हरित्वचं वैश्वानरमप्सुषदं सुवर्विदम्।
विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः' (आप० श्रौ० ५। १०। ४ )।

२७ रजतप्रदानम्। 'अध्वर्युर्यजमानस्य द्वेष्यं पृष्ट्वा तस्मै रजतं प्रयच्छेत्' [आप० श्रौ० ५। १०। ४ ]।

'यदि द्वेष्यं नाधिगच्छेद्यां दिशं द्वेष्यः स्यात्तेन निरस्येत्'(आप०श्रौ० ५। १०। ५ )।

२८ अपामुपस्पर्शनम्। 'अध्वर्युरप उपस्पृशति। एवं दक्षिणाग्न्याहवनीयायतनेषु हिरण्योपासनाभिमन्त्रणनिरसनानि कुर्यात्' ( आप०श्रौ०५।१०।६)।

२९ मन्थनदेशः। 'ब्रह्मौदनिकाद्भस्मापोह्य तस्मिञ्शमीगर्भादग्निं मन्थेत्। प्राच्यां दिशि जातप्रकाशायाम्' ( आप० श्रौ० ५। १०। ७ )।

३० अरणिस्थापनम्। 'अध्वर्युर्दशहोत्रारणी समवदध्यात्' [आप० श्रौ० ५ १०। ८ ]।

१ 'चित्तिः स्रुक्। चित्तमाज्यम्। वाग्वेदिः। आधीतं बर्हिः।
केतो अग्निः। विज्ञातमग्निः। वाक्पतिर्होता। मन उपवक्ता।
प्राणो हविः। सामाध्वर्युः' ( तै० आ० ३। १ )।

३१ अश्वस्थितिः। 'मन्थनदेशसमीपेऽश्वं स्थापयेत्। यः को वा' (आप० श्रौ० ५। १०। १० )।

३२ अग्निमन्थनम्। 'अध्वर्युरग्निं मन्थेत्। प्रतिप्रयत्नं मन्त्रावृत्तिः।

१ सहाग्नेऽग्निना जायस्व सह रय्या सह पुष्ट्या सह प्रजया
सह पशुभिः सह ब्रह्मवर्चसेन' [आप० श्रौ० ५। ९। १० ]।

३३ सामगानम्। 'ब्रह्मा मथ्यमाने शक्तेः सांकृतेः साम गायेत्' [आप० श्रौ० ५। १०। ११ ]।

'धूमे जाते गाथिनः कौशिकस्य'। 'अरण्योर्निहितो जातवेद' इति च [ आप० श्रौ० ५। ११। ११ ]।

३४ अग्नेरभिमन्त्रणम् । 'अध्वर्युरभिमन्त्रयेत्' [आप०श्रौ०५।१०।१२]।

१ ' उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् ।

आयुः प्रजाꣳ रयिमस्मासु धेह्यजस्रो दीदिहि नो दुरोणे' [ तै० ब्रा०२।५।८ ]।

३५चतुर्होतृवाचनम्। 'अध्वर्युर्यजमानं चतुर्होतॄन्वाचयेत्'[आप०श्रौ०५।११।१]।

१ 'चित्तिः स्रुक् ।चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः ।

केतो अग्निः । विज्ञातमग्निः । वाक्पतिर्होता । मन उपवक्ता

प्राणो हविः । सामाध्वर्युः ' [ तै० आ०३ । १]।

'पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता' ( तै. आ. ३।२ ) । 'अग्निर्होता । अश्विनाध्वर्यू । त्वष्टाग्नीत् । मित्र उपवक्ता' ( तै. आ. ३ । ३ ) । 'सूर्यं ते चक्षुः । वातं प्राणः । द्यां पृष्ठम् । अन्तरिक्षमात्मा । अङ्गैर्यज्ञम् । पृथिवीꣳ शरीरैः' ( तै० आ० ३ । ४ ) 'महाहविर्होता । सत्यहविरध्वर्युः । अच्युतपाजा अग्नीत् । अच्युतमना उपवक्ता । अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ । अयास्य उद्गाता' ( तै. आ० ३ । ५ )।

३६ जाताग्नेरभिमन्त्रणम् । 'अध्वर्युर्जातमग्निमभिमन्त्रयेत्' ।

१ 'अजन्नग्निः पूर्वः पूर्वेभ्यः पवमानः शुचिः पावक ईड्यः' ( आप. श्रौ. ५ । ११ । २ )।

३७ वरदानम् । यजमानः—' अध्वर्यो वरनिष्क्रयद्रव्यं ते दास्ये ' ( आप. श्रौ. ५ । ११ । ३ ) ।

३८ अभिप्राणनम् । 'यजमानो जातमग्निमभिप्राण्यात्' (उपरि उच्छ्वसेत् ) आप. श्रौ. ५ । ११ । ५ ) ।

१ 'प्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः पोषेण मह्यम् ।

दीर्घायुत्वाय शतशारदाय शतꣳ शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्याय' ( तै. ब्रा. १ । २ । १ । ५१ ]।

३९ अभिग्रहणम् । अध्वर्युर्जातमग्निमञ्जलिनाऽभिगृह्णीयात् (न्यञ्चमञ्जलिमग्नेरुपरि कुर्यात्' ) ( आप. श्रौ. ५ । ११ । ६ ) । प्रत्यग्न्याधानमध्वर्युमाग्नीध्रं चान्वारभेते जायापती ।

१ 'अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीडुजम्भम् ।

'दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभिसꣳरभन्ताम्' (तै. ब्रा. १।२।१।५०)।

४० उपसमिन्धनम्। अध्वर्युरग्निं यज्ञियकाष्ठैः प्रज्वालयति—

'सम्राडसि विराडसि सारस्वतौ त्वोत्सौ समिन्धातामन्नादं त्वान्नपत्याय' (आप० श्रौ. ५।११।६) इत्यनेन मन्त्रेण।

४१ प्रागुद्धरणम्। 'अध्वर्युरग्निं प्राञ्चमुद्धरेत्' (आप. श्रौ.५।११।६)

(प्रागुद्धरणम्—ऊर्ध्वाञ्जलिना ग्रहणम्)।

४२ गार्हपत्याधानम्। 'अध्वर्युरासीनः सर्वेषां मन्त्राणामन्तेनाग्निं संभारेषु निदध्यात्' (आप. श्रौ. ५।११।६)।

'भृगूणां त्वा देवानां व्रतपते व्रतेनादधामि'

इति भार्गवस्याऽऽदध्यात्।

'अङ्गिरसां त्वा देवानां व्रतपते व्रतेनादधामि'

इति यो ब्राह्मण आङ्गिरसः स्यात्तस्य आदध्यात्।

'आदित्यानां त्वा देवानां व्रतपते व्रतेनादधामि'

इत्यन्यासां ब्राह्मणीनां प्रजानामादध्यात् (आप. श्रौ. ५।११।७)।

भूर्भुवः—१। 'भूमिर्भूम्ना द्यौर्वरिणान्तरिक्षं महित्वा।

उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायादधे॥

आयं गौः पृश्निरक्रमीदसनन्मातरं पुनः।

पितरं च प्रयन्सुवः' (तै. सं. १।५।३)।

'घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भुवत्।

छर्दिस्तोकाय तनयाय यच्छ' (तै. ब्रा. १।१।७)।

'यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः।

ताभिः संभूय समनाः सजोषा हिरण्ययोनिर्वह हव्यमग्ने' (आप०श्रौ० ५।१२।२)।

'प्राणं त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै' (तै० ब्रा० १।२।१।६१)।

'दिवस्त्वा वीर्येण पृथिव्यै महिम्नान्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे। अग्ने गृहपतेऽहे बुध्न्य परिषद्य दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय।

पृथिव्यास्त्वा मूर्धन्सादयामि यज्ञिये लोके ।

यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाऽभिनिदधामि'(आप. श्रौ. ५ । १२ । २ ) ।

४३ सामगानम् । 'ब्रह्मा रथंतरं यज्ञायज्ञीयं च गार्हपत्याधानकाले गायेत्' ( आप० श्रौ० ५ । ११ । ६ )।

यजमानोऽपि व्याहृत्यादि यास्ते शिवाः पर्यन्तं पठेदध्वर्युणा साकम् ।

४४ अभिमन्त्रणम् । 'यजमानो गार्हपत्यमाधीयमानमभिमन्त्रयेत्' (आप०श्रौ० ५ । १२ । ३ ) ।

१ सुगार्हपत्यो विदहन्नरातीरुषसः श्रेयसीः श्रेयसीर्दधत् ।

अग्ने सपत्नाꣳ अपबाधमानो रायस्पोषमिषमूर्जमस्मासु धेहि' (तै. ब्रा. १ । २ । १ । ५४ ) ।

४५ वाचनम् । अध्वर्युर्घर्मशिरांसि यजमानं वाचयेत् ।

१ 'घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भुवत् ॥ ७४ ॥

छर्दिस्तोकाय तनयाय यच्छ' (तै० ब्रा० १ । १ । ७ । १ ) ।

'वातः प्राणस्तदयमग्निः संप्रियः पशुभिर्भुवत् ।

स्वदितं तोकाय तनयाय पितुं पच' (तै.ब्रा. १ । १ । ७ । २ ) ॥

'अर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः संप्रियः पशुभिर्भुवत् ।

यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः शुक्रं ज्योतिरजस्रं तेन मे दीदिहि ।

तेन त्वादधेऽग्निनाग्ने ब्रह्मणा।' ( तै०ब्रा०१ । १ । ७ । ३ ।४ ) ॥

४६ अग्न्यनुपस्पर्शनम् । 'आहितगार्हपत्यस्य शमनहोमेन विनोद्बोधनस्पर्शनादि न कार्यमेवमन्ययोरपि' (आप० श्रौ० ५ । १६ । ३ ) ।

४७ शमनहोमः । 'अध्वर्युस्तिलमाषवर्जं व्रीहियवप्रियङ्गुअणुगोधूमवेणुश्यामाकनीवारजर्तिलगवीधुकारण्यजकर्कटा एताः सर्वा ओषधीराज्यमिश्राः कृत्वा सुहानानीय पुनः पुनराधाने इतिमन्त्रं जुहुयात् । यथासंभवमोषधिलाभः ।

'या ते अग्ने पशुषु पवमाना प्रिया तनूर्या पृथिव्यां याऽग्नौ ।

या रथंतरे या गायत्रे छन्दसि तां त एतेनावयजे स्वाहा' ( आप० श्रौ० ५ । १६ । ४ ) ।

यजमानः—'अग्नेः पवमानायै प्रियायै तन्वा इदं न मम' ।

'या ते अग्नेऽप्सु पावका प्रिया तनूर्याऽन्तरिक्षे या वायौ या वामदेव्ये ।

या त्रैष्टुभे छन्दसि तां त एतेनावयजे स्वाहा '(आप०श्रौ०५।१६।४) ।

यजमानः—' अग्नेः पावकायै प्रियायै तन्वा इदं न मम '।

'या ते अग्ने सूर्ये शुचिः प्रिया तनूर्या दिवि याऽऽदित्ये या बृहति या जागते छन्दसि तां त एतेनावयजे स्वाहा' (आप०श्रौ०५।१२।४)।

यजमानः—' अग्नेः शुच्यै प्रियायै तन्वा इदं न मम ' ।

४८ आहवनीयाधानम् । 'अध्वर्युरर्धोदिते सूर्य आहवनीयमादधाति' (आप० श्रौ० ५ । १३ । १ )।

४९ इध्मादापनम् । 'अध्वर्युर्गार्हपत्ये प्रणयनीयमाश्वत्थमिध्ममादीपयेत्सिकता-श्चोपयमनीरुपकल्पयेत् ( पात्रेण सिकता गृह्णीयात्) ' (आप० श्रौ०५।१३।२)।

( उपयमनीः सिकताविशेषणम् ) ।

५० अग्न्युद्यच्छनम् । 'अध्वर्युरादीप्तमिध्ममुद्यच्छेत्'(आप०श्रौ०५।१३।४)।

'ओजसे बलाय त्वोद्यच्छे वृषणे शुष्मायायुषे वर्चसे ।

सपत्नतूरसि वृत्रतूः' ( तै० ब्रा० १ । २ । १ । ५६ ) ।

'यस्ते देवेषु महिमा सुवर्गो यस्त आत्मा पशुषु प्रविष्टः ।

पुष्टिर्या ते मनुष्येषु पप्रथे तया नो अग्ने जुषमाण एहि'(तै.ब्रा.१।२।१)।

'दिवः पृथिव्याः पर्यन्तरिक्षाद्वातात्पशुभ्यो अध्योषधीभ्यः ।

यत्र यत्र जातवेदः संबभूथ ततो नो अग्ने जुषमाण एहि'(तै.ब्रा.१।२।१)।

'वह्नि त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः । स नो भव शिवतमः सुप्रतीको विभावसुः' ( तै० सं० ४ । ६ । ३ । १ ) ।

५१ अग्नेर्धारणम् । 'अध्वर्युरुद्यतमुपयतं धारयेत्' [आप० श्रौ०५।१३।६]।

[ उपयतं सिकताभिरुपगृहीतम् ]

५२ वाचनम् । 'अध्वर्युर्जमानमाग्नितनूरश्वस्य दक्षिणे कर्णे वदन्वाचयेत् ।

१ 'या वाजिन्नग्नेः पशुषु पवमाना प्रिया तनूस्तामावह ।

या वाजिन्नग्नेरप्सु पावका प्रिया तनूस्तामावह ।

या वाजिन्नग्नेः सूर्ये शुचिः प्रिया तनूस्तामावह'[आप.श्रौ.५।१३।७]।

५३ दक्षिणाग्नेराधानम् । 'आग्नीध्रो गार्हपत्यादग्निमाहृत्योर्ध्वज्ञुरासीनो दक्षिणमाग्निमादध्यात् ' [आप० श्रौ० ५ । १३ । ८ ] ।

' भृगूणां त्वा देवानां व्रतपते व्रतेनाऽऽदधामि '

इति भार्गवस्याऽऽदध्यात् ।

' अङ्गिरसां त्वा देवानां व्रतपते व्रतेनाऽऽदधामि '

इति यो ब्राह्मण आङ्गिरसः स्यात्तस्याऽऽदध्यात् ।

१ 'आदित्यानां त्वा देवानां व्रतपते व्रतेनाऽऽदधामि ।

इत्यन्यासां ब्राह्मणीनां प्रजानामादध्यात् ' [आप० श्रौ० ५।११।७]।

' भुवः—भूमिर्भूम्ना द्यौर्वरिणान्तरिक्षं महित्वा ।

उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायादधे ।

आयं गौः पृश्निरक्रमीदसनन्मातरं पुनः ।

पितरं च प्रयन्त्सुवः ।

त्रिꣳशद्धाम वि राजति वाक्पतङ्गाय शिश्रिये ।

प्रत्यस्य वह द्युभिः ' [ तै० सं० १ । ५ । ३ ] ।

'वातः प्राणस्तदयमग्निः संप्रियः पशुभिर्भुवत् ।

स्वदितं तोकाय तनयाय पितुं पच' [ तै० ब्रा० १।१।७।२ ]।

१ 'यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः।

ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने' [ आप० श्रौ० ५ । १२ । २ ]।

'व्यानं त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै '( तै० ब्रा० १ । २ । १ । ६ । ३ ) ।

---

१ एतदग्न्याहरणमाश्वलायनसूत्रे ' एकयोनय इत्येके ' इति सूत्रितत्वात् । अतोऽत्राश्वलायनसूत्रानुसारमनुष्ठानं कुर्वतां विकल्पोऽन्यपक्षैः सह ।

बौधायनानामप्येवमेव । तदीयं हि सूत्रम्—

' अपि वा गार्हपत्याद्देवान्वाहार्यपचनमादधाति ' ( बौ० श्रौ० २ । १७ )।

आपस्तम्बसत्याषाढीयानां तु स्वसूत्रोक्त एव पक्षो युक्ततम इति । एवं ह्यापस्तम्बसूत्रम्—

'अथाऽऽग्नीध्रो लौकिकमग्निमाहृत्य मथित्वा वा' इति स्वसूत्रोक्तं पक्षं संत्यज्यान्यसूत्रोक्तपक्षमङ्गीकुर्वतां स्वसूत्रत्यागप्रयुक्तप्रत्यवायः समापतित इत्यलमतिप्रपञ्चेन ।

'दिवस्त्वा वीर्येण पृथिव्यै महिम्नान्तरिक्षस्य पोषेण पशूनां
तेजसा सर्वपशुमादधे' ( तै०ब्रा० १।२।१।४९ )।

'अग्नेऽन्नपा मयोभुव सुशेव दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय
पृथिव्यास्त्वा मूर्धन्त्सादयामि यज्ञिये लोके।
यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाऽभिनिदधामि' (आप० श्रौ० ५।१३।८)।

५४ सामगानम्। 'ब्रह्मा यज्ञायज्ञियं साम गायेत्' ( तथैव )।

५५ अग्न्यनुपस्पर्शनं शमनहोमश्च पूर्ववत्। तत्र शमनहोममाग्नीध्रो जुहुयात्।

५६ सामगानम्। 'ब्रह्मा वामदेव्यमभिगायेदाहवनीय उद्ध्रियमाणे' (आप० श्रौ० ५।१४।४)।

५७ साश्वाभिप्रव्रजनम्। 'अध्वर्युयजमानावश्वाः प्राञ्चः प्रव्रजेयुः' ( आप० श्रौ० ५।१४।५ )। पत्न्यपि। मन्त्रस्त्वध्वर्युयजमानयोः।

१ 'प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्निर्भवेह।
विश्वा आशा दीद्यानो विभाह्यूर्जं नो धेहि द्विपदे चतुष्पदे' ( तै०ब्रा० १।२।१।५९ )।

'विक्रमस्व महाꣳअसि वेदिषन्मानुषेभ्यः।
त्रिषु लोकेषु जागृहि प्रजया च धनेन च' ( तै०ब्रा०१।२।१।६१)।

'इमा उ मामुपतिष्ठन्तु रायं आभिः प्रजाभिरिह संवसेय।
इहो इडा तिष्ठतु विश्वरूपी मध्ये वसोर्दीदिहि जातवेदः' ( तै०ब्रा० १।२।१।५५ )।

५८ रथचक्रपरिवर्तनम्। 'ब्रह्मा विहारस्य दक्षिणतो रथं रथचक्रं वा वर्तयति यावच्चक्रं त्रिः परिवर्तयते तावति काले' (आप० श्रौ० ५।१४।६ )।

५९ अग्निनयनम्। 'अध्वर्युर्जानुदघ्ने धारयमाणस्तृतीयमध्वनोऽग्निꣳहरेन्नाभिदघ्ने तृतीयमास्यदघ्ने तृतीयं न कर्णदघ्नमत्युद्गृह्णीयात्' (आप०श्रौ०।५।१४।८)।

६० अन्तरागमनप्रतिषेधः। 'अग्न्यगारस्था नाग्निमादित्यं च व्यवेयुः' (आप० श्रौ० ५।१४।१०)।

६१ पार्श्वनियम(नय)नम्। 'अध्वर्युर्दक्षिणपार्श्वतो हस्ताभ्यां धारयन्नयेत्' ( आप० श्रौ० ५।१४।११ )।

६२ वरदानम्। यजमानः—'अध्वर्यो वरनिष्क्रयद्रव्यं ते दास्ये' ( आप० श्रौ० ५।१४।१२ )।

६३ हिरण्यनिधानम्।'अध्वर्युरधाश्वे हिरण्यं निधत्ते'(आप०श्रौ०५।१४।१३)।

६४ हिरण्यातिक्रमणम्। 'अध्वर्युर्निहितं हिरण्यमतिक्रामेत्'

'नाकोऽसि ब्रध्नः प्रतिष्ठासंक्रमणः' (आप०श्रौ०५।१४।१३)।

६५ अश्वस्य संभाराक्रमणम्। 'अश्वनेताऽऽहवनीयदेशं प्राप्य प्राञ्चमश्वं दक्षिणेन पदोत्तरतः संभारानाक्रमयेत्' (आप० श्रौ० ५। १४। १४)।

१ 'अभ्यस्थाद्विश्वाः पृतना अरातीस्तदग्निराह तदु सोम आह। बृहस्पतिः सविता तन्म आह पूषा मांधात्सुकृतस्य लोके' (तै. सं. ४।२।८।१)।

६६ अश्वस्य प्रदक्षिणमावर्तनम्। 'अश्वनेता प्रदक्षिणमश्वमावर्तयित्वा पुनरेवमाक्रामयेत्' (आप० श्रौ० ५। १४। १५)।

'यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुतं जनिम तत्ते अर्वन्' (तै० सं० ४। २। ८। २)।

६७ अश्वधारणम्। 'अश्वनेताऽऽहवनीयस्य पुरस्तात्प्रत्यङ्मुखमश्वं धारयेत्' (आप० श्रौ० ५। १४। १६)।

६८ जपः। 'यजमानो जपति' (आप०श्रौ०५।१५।२–३)।

१ 'ये ते अग्ने शिवे तनुवौ सम्राट् चाभिभूश्च ते मा विशतां ते मां जिन्वताम्। ये ते अग्ने शिवे तनुवौ विभूश्च परिभूश्च ते मा विशतां ते मा जिन्वताम्॥ ये ते अग्ने शिवे तनुवौ विराट् च स्वराट् च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ प्रभ्वी च प्रभूतिश्च ते मा विशतां ते मा जिन्वताम्॥ यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वादधे' (तै० ब्रा० १। १। ७)।

'यास्ते अग्ने घोरास्तनुवः। क्षुच्च तृष्णा च। अस्नुक्चानाहुतिश्च। अशनया च पिपासा च। सेदिश्चामतिश्च। एतास्ते अग्ने घोरास्तनुवः। स्ताभिरमुं गच्छ योऽस्मान्द्वेष्टि। यं च वयं द्विष्मः' (तै० आ० ४। २२)।

'स्निक्च स्नीहितिश्च स्निहितिश्च। उष्णा च शीता च। उग्रा च भीमा च सदाम्नी सेदिरनिरा। एतास्ते अग्ने घोरास्तनुवः।

शार्चिः पाप्मानं गच्छ । यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः' ( तै०आ०४।२३)।

६९ अग्न्यभिमन्त्रणम् । 'अध्वर्युराहवनीयाधानार्थमाहृतमग्निं प्राङ्मुख एवाभिमन्त्रयेत् ' ( आप० श्रौ० ५ । १५ । ५ ) ।

१ 'यदिदं दिवो यददः पृथिव्याः संविदाने रोदसी संबभूवतुः ।

तयोः पृष्ठे सीदतु जातवेदाः शंभूः प्रजाभ्यस्तनुवे स्योनः' ( तै. ब्रा. १ । २ । १ । ६२ । १६ ) ।

७० आहवनीयाधानम् । 'अध्वर्युराहवनीयायतनस्य पुरस्तात्तिष्ठन्नाहवनीयमादध्यात् ' ( आप. श्रौ. ५।१५।६ ) । आधानकाले ब्रह्मा बृहच्छ्येतं वारवन्तीयं यज्ञायज्ञीयं चेति सामानि गयेत् । तथैव । यथाध्वर्योर्मन्त्रसमाप्तेरनन्तरं सामगानं न स्यात्तथा प्रागेव गातव्यम् । सामगानमन्त्रसमाप्तिराधानं च युगपत् । ' गीयमान आदधाति ' इति सूत्रप्रामाण्यात् ।

' भृगूणां त्वा देवानां व्रतपते व्रतेनादधामि ।

इति भार्गवस्य ऽऽदध्यात् ।

आङ्गिरसां त्वा देवानां व्रतपते व्रतेनादधामि ।

इति यो ब्राह्मण आङ्गिरसः स्यात्तस्याऽऽदध्यात् ।

आदित्यानां त्वा देवानां व्रतपते व्रतेनादधामि ।

इत्यन्यासां ब्राह्मणीनां प्रजानामादध्यात् ' (आप० श्रौ०५ । ११ । ७) ।

' भूर्भुवः सुवः—भूमिर्भूम्ना द्यौर्वरिणान्तरिक्षं महित्वा ।

उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायादधे ॥

आयं गौः पृश्निरक्रमीदसनन्मातरं पुनः ।

पितरं च प्रयन्त्सुवः ॥

त्रिंशद्धाम विराजति वाक्पतङ्गाय शिश्रिये ।

प्रत्यस्य वह द्युभिः ॥

अस्य प्राणादपानत्यन्तश्चरति रोचना । व्यख्यन्महिषः सुवः '

( तै० सं० १ । ५ । ३ ) ।

'अर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः त्रिपिंयः पशुभिर्भुवत् ।

यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः शुक्रं ज्योतिरजस्रं तेन मे दीदिहि

तेन त्वादधेऽग्निनाग्ने ब्रह्मणा' ( तै० ब्रा० १ । १ । ७) ।

'यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः ।
ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने' (आप० श्रौ० ५ । १५ । ६ ) ।

अपानं त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै ' ( तै० ब्रा० १।२।१।६३) ।

'दिवस्त्वा वीर्येण पृथिव्यै महिम्नान्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे' (आप०श्रौ० ५ । १५ । ६) ।

अग्ने रुग्राडजैकपादाहवनीयदिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय' ( तथैव ) ।

' पृथिव्यास्त्वा मूर्धन्त्सादयामि यज्ञिये लोके ।
यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाऽभिनिदधामि ' ( तथैव ) ।

७१ अभिमन्त्रणम् । 'यजमान आधीयमानमभिमन्त्रयेत्' (तथैव ५।१६।१)।

१ 'आनशे व्यानशे सर्वमायुर्व्यानशे' ( तै० ब्रा १ । १ । ७ )।

'अहं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव योनिरस्मि ।
ममैव सन्वहं हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेदः ' (तथैव) १ । २ । १ । ५२ )।

७२ अनुवर्तनम् । ' यजमानो गार्हपत्याधानानुवर्तनवदनुवर्तयेत् ' ( आप० श्रौ० ५ । १६ । २ ) ।

७३ 'अग्न्यनुपस्पर्शनं शमनहोमं च पूर्ववदध्वर्युः कुर्यात्' (तथैव५।१।३) ।

७४ समिदाधानम् । 'अध्वर्युस्तिस्र आश्वत्थीः समिध एकैकस्मिन्नादध्यात् ' ( तथैव ५ । १७ । २ ) ।

१ 'अग्न आयूंषि पवस आसुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाᳪ स्वाहा' ( तै० सं० १ । ३ । १४ ) ।

यजमानः–' अग्नये पवमानायेदं न मम ' ।

१ 'अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् ।
दधत्पोषᳪ रयिं मयि स्वाहा' ( तथैव ) ।

यजमानः–' अग्नये पवमानायेदं न मम ' ।

१ 'अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः।

तमीमहे महागयꣳ स्वाहा' (तै० आ० २।५)।

यजमानः—'अग्नये पवमानायेदं न मम'।

'प्रत्यृचं गार्हपत्ये दक्षिणाग्नावाहवनीये च तिस्रस्तिस्रस्तिस्रः समिधः। शमीमय्यो घृतान्वक्तास्तिसृभिस्तिस्र एकैकस्मिन्नादध्यात्' (आप० श्रौ० ५।१७।४)।

शमीमय्यः शमीमयीरित्यर्थः।

१ 'समुद्रादूर्मिर्मधुमाꣳ उदारदुपाꣳशुना सममृतत्वमानट्।

घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः स्वाहा' (तै० आ० १०।१२)।

यजमानः—'आदित्यात्मने ब्रह्मण इदं न मम'।

'वयं नाम प्र ब्रवामा घृतेनास्मिन्यज्ञे धारयामा नमोभिः।

उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत्स्वाहा' (तै० आ० १०।१२)।

यजमानः—'यज्ञात्मने ब्रह्मण इदं न मम'।

'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।

त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याꣳ आविवेश स्वाहा' (तै० आ० १०।१२)।

यजमानः—'यज्ञात्मने ब्रह्मण इदं न मम'।

इति प्रत्यृचं गार्हपत्ये दक्षिणाग्नावाहवनीये च नव समिधः। एवं नानावृक्षीया घृताभ्यक्ताः। 'तत्र—औदुम्बरीमादध्यात्' (आप० श्रौ० ५।१७।५)।

'प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ।

त्वाꣳ शश्वन्त उपयन्ति वाजाः स्वाहा' (तै० सं० ४।६।५)।

यजमानः—'अग्नय इदं न मम'। 'वैकङ्कतीमादध्यात्' (आप० श्रौ० ५।१७।५)।

१ 'विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे।

यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवीꣳषि जुहुरे समिद्धे स्वाहा' (तै० सं० ४।६।५)।

यजमानः—'अग्नय इदं न मम'। 'शमीमयीमादध्यात्' (५।१७।५)

'ता१ँ सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम् ।

यामस्य कण्वो अदुहत्प्रपीना१ँ सहस्रधारां पयसा महीं गा१ँ स्वाहा ' ।

( तै. सं. ४ । ६ । ५ ) ।

यजमानः–' सवित्र इदं न मम ' । एवं दक्षिणाग्नावाहवनीये च मिलित्वा समिधो नव ।

७५ प्राजापत्यहोमः । अयमग्निहोत्रस्थानीयः । ' अध्वर्युर्द्वादशगृहीतेन स्रुचं पूरयित्वा प्रजापतिं मनसा ध्यायञ्जुहुयात्'(आप.श्रौ.५।१७।७)'प्रजापतये स्वाहा'। यजमानः–' प्रजापतय इदं न मम ' ।

७६ द्वेष्याय प्रेषणम् । यजमानो घोरां जपेत्

'यास्ते अग्ने घोरास्तनुवः । क्षुच्च तृष्णा च । अस्नुक्चानाहुतिश्च ।

अशनया च पिपासा च सेदिश्चामतिश्च ।

एतास्ते अग्ने घोरास्तनुवस्ताभिः पाप्मानं गच्छ ।

योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ' ( तै. आ. ४ । २२ ) ।

'स्निक्च स्नीहितिश्च स्निहितिश्च । उष्णा च शीता च ।

उग्रा च भीमा च सदाम्नी सेदिरनिरा ।

एतास्ते अग्ने घोरास्तनुवस्ताभिः पाप्मानं गच्छ ।

योऽस्मान्द्वेष्टि यं च वयं द्विष्मः' ( तै. आ. ४ । २३ ) ।

७७ पूर्णाहुतिहोमः–' अध्वर्युर्द्वादशगृहीतेन स्रुचं पूरयित्वा सप्तवत्या पूर्णाहुतिं जुहुयात् ' (आप. श्रौ. ५ । १८ । १ ) ।

१ 'सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि ।

सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन स्वाहा '( तै. सं. ४ । ६ । ५ ) ।

यजमानः–' अग्नये सप्तवत इदं न मम ' ।

७८ वरदानम् । यजमानः–' अध्वर्यो वरनिष्क्रयद्रव्यं ते दास्ये ' ।

७९ जपः । यजमानः शिवा जपेत् ।

' ये त अग्ने इत्यारभ्य ताभिस्त्वादधे इत्यन्तम्' ( तै. ब्रा. १ । १ । ७) ।

८० प्रायश्चित्तहोमः । 'अध्वर्युराहवनीये सर्वाणि प्रायश्चित्तानि [जुहुयात्]। पुनराधेये सूर्योऽनाविः स्यादाज्याहुतीर्जुहुयात्' (आप०श्रौ० ९।१२।३)।

१ 'उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमꣳ स्वाहा' (तै॰सं॰४।१।७)।
यजमानः—'सूर्यायेदं न मम'। सर्वत्राग्न एवमेव त्यागः।
'उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यꣳ स्वाहा' (तै० सं० १।४।४३)।
'चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा' (तै. सं. १।४।४३)।
अस्मिन्कर्मणि ज्ञाताज्ञातकृतदोषपरिहारार्थं वक्ष्यमाणं प्रायश्चित्तमध्वर्युर्जुहुयात्—
१ 'अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु ।
अग्ने तदस्य कल्पय त्वꣳहि वेत्थ यथातथꣳ स्वाहा' (तै.ब्रा.३।७।११)।
यजमानः—'अग्नय इदं न मम'।
'पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः ।
अग्ने तदस्य कल्पय त्वꣳहि वेत्थ यथातथꣳ स्वाहा' (तै. ब्रा. ३।७।११)।
त्यागः पूर्ववत् ।
'यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्तासः ।
अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाꣳ ऋतुशो यजाति स्वाहा' (तै. ब्रा. ३।७।११)। त्यागः पूर्ववत् ।
कर्मान्तरितकर्मविपर्यासार्थम्—
१ 'त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽव यासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्र मुमुग्ध्यस्मत्स्वाहा' (तै. सं. २।५।१२)।
यजमानः—'अग्नीवरुणाभ्यामिदं न मम'।
१ 'स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अव यक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि स्वाहा' (तै. सं. २।५।१२)।
यजमानः—'अग्नीवरुणाभ्यामिदं न मम'।
१ 'त्वमग्ने अयास्ययासन्मनसा हितः ।
अयासन्हव्यमूहिषेऽया नो धेहि भेषजꣳ स्वाहा' (तै.सं.२।४।१)।

यजमानः—'अयसेऽग्नय इदं न मम'।

वाङ्नियमलोपप्रायश्चित्तार्थम्—

१ 'इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्।

समूढमस्य पांसुरे स्वाहा' (तै० सं० १।२।१३)।

यजमानः—'विष्णव इदं न मम'।

१ 'त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्।

उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्स्वाहा' (तै० सं० १।८।६)।

यजमानः—'त्र्यम्बकायेदं न मम'।

स्वराक्षरवर्णादिलोपप्रायश्चित्तार्थम्—

१ 'आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः।

यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम स्वाहा'

(तै. ब्रा. ३।७।११)।

यजमानः—'इन्द्राय हरिवते वर्धमानायेदं न मम'।

ऋत्विङ्मौढ्यप्रायश्चित्तार्थम्—

१ 'यद्विद्वांसो यदविद्वांसो मुग्धाः कुर्वन्त्यृत्विजः।

अग्निर्मा तस्मादेनसः श्रद्धा देवी च मुञ्चतां स्वाहा' (आप० श्रौ०

३।१२।१)।

यजमानः—'अग्नये श्रद्धायै देव्या इदं न मम'।

अग्न्युपघातप्रायश्चित्तार्थम्—

१ 'पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः।

घृतेन त्वं तनुवो वर्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहा'

(तै० सं० ४।२।३)।

यजमानः—'अग्नये वसुनीथायेदं न मम'।

| | | |
|---|---|---|
| आप. श्रौ. सू. | भूः स्वाहा | यजमानः—'अग्नय इदं न मम'। |
| | भुवः स्वाहा | „ —'वायव इदं न मम'। |
| (९।१६।४) | सुवः स्वाहा | „ —'सूर्यायेदं न मम'। |
| | भूर्भुवः सुवः स्वाहा | „ —'प्रजापतय इदं न मम'। |

'यजुर्भ्रेषप्रायश्चित्तार्थं दक्षिणाग्नौ जुहुयात्' ( ९ । १६ । ४ ) ।

'भुवः स्वाहा वायव इदं न मम' ।

८१ आहिताग्नेर्व्रतसंकल्पः—

यजमानः—'अनृतं न वदिष्यामि । अनाश्वासं ब्राह्मणं न वासयिष्ये । सूर्योढमतिथिं वसत्यै नापरोत्स्ये । क्रवीसपक्वस्य नाशिष्ये । क्लिन्नं दारु नाग्नावाधास्ये । अन्तर्नाव्यपो नाशिष्ये । स्वकृत इरिणे नोष्ये पुण्यः स्याम् । हिंकृत्य स्त्रियमुपैष्यामि । सायमाहुतावहुतायां नाशिष्ये । प्रातराहुतावहुतायां नाशिष्ये । नक्तमन्नादन्यन्न दास्ये । एतस्मिन्त्संवत्सरे पशुनाऽनिष्ट्वा मांसं न भक्षयिष्ये' ( आप० श्रौ० ५ । २५ । ३–१९ ) ।

८२ होमः । अध्वर्युः—

१ 'ये अग्नयो दिवो ये पृथिव्याः समागच्छन्तीषमूर्जं दुहानाः ।
ते अस्मा अग्नयो द्रविणं दत्त्वेष्टाः प्रीता आहुतिभाजो भूत्वा
यथालोकं पुनरस्तं परेत स्वाहा' (आप० श्रौ० ५ । ८ । १) ।

यजमानः—'अग्निभ्य इदं न मम' ।

८३ उपस्थानम् । यजमान उपतिष्ठते—

१ 'अथर्वापितुं मे गोपायान्नं प्राणेन संमितम् ।
त्वया गुप्ता इषमूर्जं मदन्तो रायस्पोषेण समिषा मदेम' ( आप० श्रौ० ५ । १८ । २ ) । इत्यन्वाहार्यपचनं ( दक्षिणाग्निम् ) ।

१ 'नर्य प्रजां मे गोपाय मूलं लोकस्य संततिम् ।
आत्मनो हृदयान्निर्मितां तां ते परिददाम्यहम्' (आप० श्रौ०५।१८।२)।

इति गार्हपत्यम् ।

१ 'शंस्य पशून्मे गोपाय विश्वरूपं धनं वसु ।
गृहाणां पुष्टिमानन्दं तांस्ते परिददाम्यहम्' (आप० श्रौ०५।१८।२) ।

इत्याहवनीयम् ।

१ 'पञ्चधाग्नीन्व्यक्रामद्विराट् सृष्टा प्रजापतेः ।
ऊर्ध्वारोहद्रोहिणी योनिरग्नेः प्रतिष्ठितिः' (आप० श्रौ०५।१८।२) ।

इति सर्वानग्नीनुपतिष्ठेत ।

इत्याधानप्रयोगः ।

## आग्नेयादीष्टयः। तत्राऽऽग्नेयेष्टिः।

यजमानः सपत्नीकः प्राणानायम्य 'परमेश्वरप्रीत्यर्थमाग्नेयं हविर्निर्वप्स्ये'। विद्युद सि०। पौर्णमासं तन्त्रम्। अष्टौ कपालानि। अग्निर्देवता। आसादनान्ते क्लृप्तिसामनसीभ्यामग्नीन्यजमान उपतिष्ठते। प्रोक्षणादिमन्त्रेणाभिघारणम्। प्रियेणेत्यासादनम्। यज्ञोऽसि०। न पार्वणहोमः। नारिष्ठादि। विरुज्य प्राशित्रम्। वक्ष्यमाणाधानदक्षिणा वस्त्रदानं च। अग्नय इदं०। अग्नेरहमुज्जितिमनूज्जेषम्। अगन्माग्नीनग्नीनगन्म संदृशस्त इत्यादि। यज्ञो बभूव यज्ञशंचमवर्जेम्। सिद्धमिष्टिः संतिष्ठते। अथाऽऽज्याहुतयः। अग्नये पवमानाय स्वाहा। यज० अग्नये पवमानायेदं०। अग्नये पावकाय स्वाहा। यज० अग्नये पावकायेदं०। अग्नये शुचये स्वाहा। यज० अग्नये शुचय इदं०। सोमाधान आज्याहुतीनां निवृत्तिः।

### अथेष्टित्रयपक्षो लिख्यते।

सपत्नीकयजमानः संकल्पं करोति। इष्टचा यक्ष्ये। विद्युदसि०। अद्य यज्ञाय०। यस्यां तिथौ तस्याः कीर्तनम्। ऐष्टं हविः। पौर्णमासं तन्त्रम्। पञ्चदश सामिधेन्यः। बर्हिराहृत्य व्रतप्रवेशः। परिस्तरणम्। देवा देवेषु। पात्रासादनकाले द्वात्रिंशत्कपालानि। अन्वाहार्यस्थालीवर्जमितराणि प्रकृतिवत्। निर्वपणकाले—अग्नये जुष्टं निर्व०। अग्नये पवमानाय जुष्टं नि०। अग्नये पावकाय जुष्टं नि०। अग्नये शुचये जुष्टं नि०। इदं देवानामित्यादि०। 'अग्ने हव्यꣳ रक्षस्वाग्ने पवमान हव्यꣳ रक्षस्वाग्ने पावक हव्यꣳ रक्षस्वाग्ने शुचे हव्यꣳ रक्षस्व' इत्युपसादनम्। सद्गुकायामित्यादि। प्रोक्षण्यभिमन्त्रणान्तं कृत्वा न प्रोक्षणम्। अथ यजमानः क्लृप्तिसामनसीभ्यामग्नीनुपतिष्ठते। तत्र मन्त्रः—'कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः। कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः। येऽग्नयः समनसोऽन्तरा द्यावापृथिवी। वासन्तिकावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु' [इति]। शैशिरावृतू इति शैशिरे। प्रोक्षणादिकर्म प्रतिपद्यते। 'अग्नये वो जुष्टं प्रोक्षाम्यग्नये पवमानाय वो जुष्टं प्रोक्षाम्यग्नये पावकाय वो जुष्टं प्रोक्षाम्यग्नये शुचये वो जुष्टं प्रोक्षामि'। एवमधिवापः संवापश्च। अग्नये जुष्टमधिवपामि। अग्नये जुष्टꣳ संवपामीति विशेषः। पुरोडाशपिण्डं कृत्वा। यथाभागं व्यावर्तध्वम्—व्यावर्तेथाम्, इदमग्नेः पावकस्य। इदमग्नेः शुचेः। मन्त्रेणाभिघारणम्। प्रियेणेत्यासादनम्। यज्ञोऽसीति चतुर्णाम्। अयं यज्ञ इत्यादि पौर्णमासवत्। प्रचरणकाले—आग्नेयस्य प्रकृतिवत्। अग्नये पवमानायानुब्रूहि। अग्निं पवमानं यज। अग्नये पवमानायेदं०। अग्नेः पवमानस्याहं देवयज्यययाऽन्नादो भूयासम्। अग्नये पावकायानुब्रूहि। अग्निं पावकं यज। अग्नये पावकायेदं०। अग्नेः पावक-

स्याहं॰ न्नादो भूयासम् । अग्नये शुचयेऽनुब्रूहि । अग्निं शुचिं यज । अग्नये शुचय इदं॰ । अग्नेः शुचेरहं देवयज्ययाऽन्नादो भूयासम् । न पार्वणहोमः । नारिष्ठादि । सर्वेषां विरोजनप्राशित्रचतुर्धाकरणानि । चतुर्धाकरणभक्षणान्ते आधानदक्षिणादानम् । 'अग्नीदजपूर्णपात्रसार्वसूत्रोपबर्हणनिष्क्रयद्रव्यं ते दास्ये ब्रह्मन्नश्वनिष्क्रयद्रव्यं ते दास्ये । अध्वर्यो अनडुन्निष्क्रयद्रव्यं ते दास्ये । होतर्धेनुनिष्क्रयद्रव्यं ते दास्ये । ऋत्विजो वासोगेमिथुनद्वयनवरथगोनिष्क्रयद्रव्यं वो दास्ये'। अध्वर्यवे परिहितवस्त्रदानं च । तूष्णीमेव प्रतिग्रहः । ब्रह्मन्प्रस्थास्याम इत्यादि ।

अग्नेः पवमानस्याहमुज्जिति॰ । अग्नेः पावकस्याहमुज्जिति॰ । अग्नेः शुचेरहमुज्जिति॰ । अगन्माग्नीनग्नीनगन्म संदृशस्त इत्यादि । यज्ञो बभूव यज्ञशंचमवर्जम् । सिद्धमिष्टिः संतिष्ठते । अपरित्यज्याग्नीन् । यजमान इष्ट्या यक्ष्य इति संकल्पयेन् । विद्युदसि । तेष्वेवाग्निष्वन्वाधानादि । ऐष्टं हविः। ऐन्द्राग्नस्य मुख्यत्वादामावास्यं तन्त्रम् । अन्वाधाय व्रतप्रवेशः । सप्तदश सामिधेन्यः । वेदं कृत्वा वेदिः । पात्रप्रयोगकाल एकादश कपालानि स्थाली स्फ्यश्च द्वंद्वमन्वाहार्यस्थालीवर्जमितराणि प्रकृतिवत् । निर्वपणकाल इन्द्राग्निभ्यां जुष्टं निर्वपामि । अदित्यै जुष्टं निर्वपामि । इन्द्राग्नी हव्यं रक्षेथामदिते हव्यं रक्षस्व । उत्करे त्रिर्निनीय । यथाभागं व्यावर्तेथाम् । इदमिन्द्राग्न्योः पुरोडाशीयान् । इदमदित्या इति चर्वर्थान् । कृष्णाजिनादानादि । इन्द्राग्निभ्यां जुष्टमधिवपामि । कपालानामुपधानकाले मन्त्रैरष्टावुपधाय । तूष्णीं त्रीणि । ध्रुवोऽसीति चरुस्थालीमुपदधाति । पिष्टानुत्पूय तण्डुलानुत्पुनाति । देवस्त्वा सवितेति घृतमुत्पूय पश्चात्पुनाति । उदकवत्यां स्थाल्यां घृतमासिञ्चेत् । पुरोडाशमधिश्रित्य तेनैव मन्त्रेण तण्डुलानावपति । प्रथनादि पुरोडाशस्यैव । द्वयोः पर्यग्निकरणम् । अदित्यै जुष्टमभिघारयामि । आर्द्रो भुवनस्येति चरोरुद्वासनम् । प्रियेणेत्यासादनम् । यज्ञोऽसि॰ । अयं यज्ञः॰ । यो नः कनीयः॰ । ममाग्ने॰ । पञ्चहोता॰ इत्येतैरासन्नाभिमर्शनम् । प्रकृतिवदैन्द्राग्नस्य प्रचारः । अदित्या अनुब्रूहि । अदितिं यज । अदित्या इदं॰ अदित्या अहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीय । न पार्वणहोमः । नारिष्ठादि । चरुं विरुज्य प्राशित्रम् । चतुर्धाकरणकाले कृत्स्नं चरुं ब्रह्मणे परिहरेत् । तमृत्विजो भक्षयन्ति । इदं यजमानस्येति निर्दिश्य वेदेन परिहरति । गोनिष्क्रयद्रव्यमन्तर्वेद्यामासाद्य ब्रह्मन्ब्रह्मासीति॰ । ब्रह्माऽभिमृशति । ब्रह्म पिन्वस्व॰ । सहस्रधारमुत्समक्षीयमाणम् । तद्दाधार पृथिवीमन्तरिक्षं दिवं च तेन गोनिष्क्रयद्रव्येणाति॰ । दक्षिणत एत॰ । इदं वो गोनिष्क्रयद्रव्यं यथाभागं प्रतिगृह्णीध्वम् । नयतु देवि दक्षिणे । उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु ।

तेनामृतत्वमश्यामित्यादि प्रतिग्रहमन्त्रः । अगन्माग्नीनगन्म संदृशस्त इत्यादि । यज्ञो बभूव यज्ञशंचमवर्जम् । सिद्धमिष्टिः संतिष्ठते । अपरित्यज्याग्नीन् । यजमान इष्ट्या यक्ष्ये । विद्युदसि० । तेष्वेवाग्निष्वन्वाधानादि । ऐष्टं हविः । पौर्णमासं तन्त्रम् । बर्हिराहृत्य व्रतप्रवेशः । पञ्चदश सामिधेन्यः । पात्रासादनकाले द्वाविंशत्कपालानि स्थाली च । शिष्टानि सान्वाहार्यस्थालीनि प्रकृतिवत् । अग्नाविष्णुभ्यां जुष्टं निर्वपामि । अग्नीषोमाभ्यां जु० । विष्णवे शिपिविष्टाय जु० । 'अग्नाविष्णू हव्यं रक्षेथाम् । विष्णो शिपिविष्ट हव्यं रक्षस्व' इत्युपसादनम् । उत्करे त्रिर्निनीय । यथाभागं व्यावर्तध्वम् । 'इदमग्नाविष्णवोरग्नीषोमीययोः' इति पुरोडाशार्थान् । 'इदं विष्णोः शिपिविष्टस्य' इति चर्वर्थान् । कृष्णाजिनादानादि । अग्नाविष्णुभ्यां जुष्टमधिवपाम्यग्नीषोमाभ्यां जुष्टमधिवपामि धान्य० । कपालानि मन्त्रेणाष्टावुपधाय तूष्णीं त्रीणि । एवमग्नीषोमीयस्य । ध्रुवोऽसीति स्थालीमासाद्य । अधिश्रयणादि पूर्ववत् । पुराडाशौ तूष्णीमभिघार्य विष्णवे शिपिविष्टाय जुष्टमभिघारयामि प्रियेणेत्यासादनम् । यज्ञोऽस्यथं यज्ञो ममाग्ने चतुर्होता प्रचरणकाले अग्नाविष्णुभ्यामनुब्रूहि । अग्नाविष्णू यज । अग्नाविष्णुभ्यामिदं० । अग्नाविष्णवोरहं देवयज्यया वृत्रहा भूयासम् । अग्नीषोमीयस्य प्रकृतिवत् । विष्णवे शिपिविष्टायानुब्रूहि । विष्णुं शिपिविष्टं यज । विष्णवे शिपिविष्टायेदं० । विष्णोः शिपिविष्टस्याहं देवयज्ययाऽन्नादो भूयासम् । न पार्वणहोमः । नारिष्ठादि । अन्वाहार्यो दक्षिणा । अगन्माग्नीनग्नीनगन्म संदृशस्त इत्यादि । यज्ञो बभूव यज्ञशंचमवर्जम् । सिद्धमिष्टिः संतिष्ठते ।

इतीष्टित्रयपक्षः समाप्तः ।

## अथेष्टिद्वयपक्षाश्रयेण प्रयोगो लिख्यते ।

आदित्यं घृते चरुं सप्तदशसामिधेनीकं धेनुदक्षिणं सर्वेषामनुनिर्वाप्याणां स्थाने वाजसनेयिनः समामनन्ति । पूर्वोक्तामाग्नेयेष्टिं समाप्यापरित्यज्याग्नीनाज्याहुतीर्न जुहुयात् । यजमा० । सर्वेषामनुनिर्वाप्याणां स्थाने । इष्ट्या यक्ष्ये । विद्युदसि० । तेष्वेवाग्निष्वन्वाधानादि । ऐष्टं हविः । पौर्णमासं तन्त्रम् । सप्तदश सामिधेन्यः । पात्रप्रयोगकाले स्थाली स्फ्यश्च द्वंद्वम् । शम्यादृषदुपलान्वाहार्यस्थालीवर्जमितराणि प्रकृतिवत् । उत्पवनपात्रं च । पवित्रकरणादि । अदित्यै जुष्टं निर्वपामि । अदिते हव्यं रक्षस्व नोचैः स[illegible]तवै । हस्तेन तुषोपवापः । ध्रुवोऽसीति स्थाल्यासादनम् । तण्डुलानुत्पूय घृतमुत्पवनपात्र्यामानीय घर्मोऽसीति तण्डुलानावपति ।

अन्तरितꣳ रक्षः। अविदहन्तः श्रपयत। स्फ्यादानादि। सूर्यज्योति०। अदित्यै जुष्टमभिघारयामि। आर्द्रो भुवनस्येत्युद्वासनम्। अलंकृत्य प्रियेणेत्यासादनम्। यज्ञोऽसीत्यादिप्रचारः पूर्ववत्। नात्र ब्रह्मणे परिहरणम्। चतुर्धाकरणमेव। धेनुनिष्क्रयद्रव्यं दक्षिणा। ब्रह्मन्ब्रह्माऽसीत्यादि। सहस्रधारमुत्समक्षीयमाणं तद्दाधार०। तेन धेनुनिष्क्रयद्रव्येणा०। इदं वो धेनुनिष्क्रय०। नयतु देवि दक्षिणे। उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु। तेनामृतत्वमश्यां०। अगन्माग्नीनग्नीमगन्म संदृशस्त्व इत्यादि। यज्ञो बभूव। यज्ञशंचमवर्जम्। सिद्धमिष्टिः संतिष्ठते।

इतीष्टिद्वयपक्षः समाप्तः।

## अथाऽऽश्वलायनसूत्रोक्तषड्ढविष्केष्टिर्लिख्यते।

पूर्ववदाज्याहुतीर्जुहुयात्। यजमान आचमनादि कृत्वा ‘अग्निं पवमानमग्निं पावकमग्निं शुचिमिन्द्राग्नी अदितिं चाऽऽग्नेयेन समानतन्त्रं कुर्वन्निष्ट्या यक्ष्ये। विद्युदसि०। तेष्वेवाग्निष्वन्वाधानादि। ऐष्टꣳ हविः। पौर्णमासं तन्त्रम्। सप्तदश सामिधेन्यः। त्रिचत्वारिंशत्कपालानि। स्थाली च। उत्पवनपात्रं च। अन्वाहार्यस्थालीवर्जमितराणि प्रकृतिवत्। निर्वपणकाले—अग्नये जुष्टं नि०। अग्नये पवमानाय जुष्टं नि०। अग्नये पावकाय जुष्टं नि०। अग्नये शुचये जुष्टं नि०। इन्द्राग्निभ्यां जुष्टं नि०। अदित्यै जुष्टं नि०। उत्करे त्रिर्निनीय। यथाभागं व्यावर्तध्वम्। ‘इदमग्नेरग्नेः पवमानस्याग्नेः पावकस्याग्नेः शुचेरिन्द्राग्न्योः’ इति पुरोडाशार्थान्। इदमदित्याश्चर्वर्थान्। पिण्डं कृत्वा यथाभागं व्यावर्तध्वम्। यथाभागं व्यावर्तेथामित्यन्तयोर्निर्देशः। इदमिन्द्राग्न्योरिदमदित्याः। उपांश्वेव प्रचारः सर्वेषाम्। मार्जनान्त आग्नेयादीनां चतुर्णां चतुर्धाकरणं कृत्वा बर्हिषदं करोति। ततोऽदितिचरुं ब्रह्मणे परिहरति। पूर्ववद्भक्षयन्ति। आधानदक्षिणादानम्।

यजमानः—‘ अग्नीदजपूर्णपात्रसार्वसूत्रोपबर्हणनिष्क्रयद्रव्यं ते दास्ये। ब्रह्मन्नश्वनिष्क्रयद्रव्यं ते दास्ये। अध्वर्यो अनडुन्निष्क्रयद्रव्यं ते दास्ये। होतर्धेनुनिष्क्रयद्रव्यं ते दास्ये। ऋत्विजो वासोगोमिथुनद्वयनवरथगोनिष्क्रयद्रव्यं वो दास्ये। सप्तदशकृत्वोऽपाननादीनां निवृत्तिः। तूष्णीमेव प्रतिग्रहः। अध्वर्यवे परिहितवस्त्रदानं च। ब्रह्मन्प्रस्थास्याम इत्यादि पवमानेष्टिवत्कार्यम्। सिद्धमिष्टिः संतिष्ठते। इत्याधानं समाप्तम्॥

अजस्रधारणम् ।

आधानाद्द्वादशरात्रमजस्रा अग्नयः ।

द्वादशाहमजस्रेष्वग्निषु यजमानः स्वयमग्निहोत्रं जुहुयादप्रवसन्नहतं वासो बिभर्ति ।

दशहोतृहोमः—अग्निहोत्रमारप्स्यमानो दशहोतारं मनसाऽनुद्रुत्याऽऽहवनीये स्रुग्रहं हुत्वाऽथ सायमग्निहोत्रं जुहोति ।

यजमान आचम्य प्राणानायम्याग्निहोत्रमारप्स्ये तेन यावज्जीवं होष्यामीति संकल्प्य पुनरग्निहोत्रमारप्स्यमानो दशहोतारं होष्यामीति संकल्प्य दशहोतृहोमकर्मणि अध्वर्युं त्वा वृणे इत्यध्वर्युं वृणुयात्—

अध्वर्युः—लौकिकाज्यं जुह्वां सकृद्गृहीतं चतुर्गृहीतं वा गृहीत्वा तस्मिन्नेवाश्वपदिके दशहोतारं मनसाऽनुद्रुत्य जुहुयात् । मन्त्रस्तु—

चितिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्निः । वाक्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाध्वर्युः । इति संततं मनसा जपित्वा । अथोपांशुवाक्यशः पाठश्च ।

वाचस्पते विधे नामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम । वाचस्पतिः सोमं पिबतु । आस्मासु नृम्णं धात्स्वाहा० । यज०—वाचस्पतये ब्रह्मण इदं । अग्निहोत्रहोमः । यजमान आचम्य स्वयमग्निहोत्रं पयसा होष्यामीति संकल्प्य यथासूत्रं जुहुयात् । आपस्तम्बीयस्तु—तस्मिन्सायमग्निहोत्रे व्याहृतिभिर्हविरुपसादयेत् । नित्यस्तु, उपसादनमन्त्रो निवर्तते । तत आरभ्य संवत्सरेऽतीते यदनन्तरं सायमग्निहोत्रहोमस्तत्राप्येवमुपसादयेत् । दक्षिणादानम्—त्रयोदशेऽह्नि प्रातरग्निहोत्रꣳ हुत्वाऽजस्रोत्सर्गं कृत्वा यां प्रथमामाग्निहोत्राय दोग्धि तां गां ब्राह्मणाय दक्षिणां दद्यात् । सारस्वतहोमानुष्ठानम्—संस्थिते सेष्टिकेऽग्न्याधेये याऽनन्तरा पौर्णमासी तस्यां पौर्णमास्यां तत्पूर्वदिने वा यजमानः प्रातरग्निहोत्रꣳ हुत्वा दर्शपूर्णमासावारभमाणः सारस्वतौ होमौ होष्यामीति संकल्प्य, अस्मिन्सारस्वतहोमेऽध्वर्युं त्वामहं वृणे इति वृणुयात् । अध्वर्युराहवनीयं विहृत्य लौकिकाज्यं जुह्वाꣳ सकृद्गृहीतं गृहीत्वा पूर्णा पश्चादुत पूर्णा परस्तादुन्मध्यतः पौर्णमासी जिगाय तस्यां देवा अधिसंवसन्त उत्तमे नाक इह मादयन्ताꣳ स्वाहा । पौर्णमास्या इदं० । पुनर्गृहीत्वा । यत्ते देवा अदधुर्भागधेयममावास्ये संवसन्तो महित्वा । सा नो यज्ञं पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरꣳ स्वाहा । अमावास्या इदं० । अग्निं परित्यजेत् । अन्वारम्भणीयेष्ट्यनुष्ठानम् । यजमान आ-

चन्थ दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयया यक्ष्ये । विद्युदसि० । अस्यामन्वारम्भणीयायामध्वर्युं त्वामहं वृणे । इत्यध्वर्युं वृणीयात् । एवं ब्रह्माणं होतारमग्नीध्रं च । विहरणादि । चतुर्दशीं ये मविष्टाः पञ्चदशीं वा । अन्वारम्भणीयः हविः । पौर्णमासं तन्त्रम् । पञ्चदश सामिधेन्यः । एकत्रिंशत्कपालानि स्थाली च । उत्पवनपात्रम् । अन्वाहार्यस्थालीवर्जमितराणि प्रकृतिवत् । देवस्य त्वा० । हस्ताभ्यामग्नाविष्णुभ्यां जुष्टं निर्वपामि । सरस्वत्यै जुष्टं निर्वपामि । सरस्वते जुष्टं निर्वपामि । अग्नये भगिने जुष्टं निर्वपामि । अग्नाविष्णू हव्यः रक्षेथाः सरस्वति हव्यः रक्षस्व सरस्वन्हव्यः रक्षस्वाग्ने भगिन्हव्यः रक्षस्वेत्युपसादनम् । देवस्य त्वा० । अग्नाविष्णुभ्यां वो जुष्टं प्रोक्षामि सरस्वत्यै वो जुष्टं प्रोक्षामि सरस्वते वो जुष्टं प्रोक्षाम्यग्नये भगिने वो जुष्टं प्रोक्षामि । उत्करे त्रिर्निनीय । यथाभागं व्यावर्तध्वम् । इदमग्नाविष्णवोः सरस्वतोऽग्नेर्भगिनः । पेषणार्थान् । इदः सरस्वत्याः । इति चर्वर्थान् । देवस्य त्वा० मग्नाविष्णुभ्यां जुष्टमधिवपामि सरस्वते जुष्टमधिवपाम्यग्नये भगिने जुष्टमधिवपामि धान्यम० । मन्त्रेणाष्टौ कपालान्युपधाय । तूष्णीं त्रीणि । ध्रुवोऽसीति स्थालीम् । ततो द्वितीयचतुर्थषष्ठाष्टमानामावृत्त्या द्वादश कपालानि सरस्वतः । ततोऽष्टावग्नेर्भगिनः । पिष्टान्युत्पूय तण्डुलानुत्पुनाति । अप उत्पूय स्थाल्यामानयति । पिण्डं कृत्वा यथाभागं व्यावर्तध्वम् । व्यावर्तेथाम् । इदः सरस्वतः । इदमग्नेर्भगिनः । प्रथममधिश्रित्य तण्डुलानोप्योत्तरावधिश्रयति । प्रथनं पुरोडाशानामन्तरितः सर्वेषाम । प्रथमं तूष्णीमभिघार्य मन्त्रेणेतराणि । सरस्वत्यै जुष्टमभिघारयाति । सरस्वते जुष्टमभि० । अग्नये भगिने जुष्टमभि० । पूर्ववच्चरोरुद्वासनम् । प्रियेणेत्यासादनम् । प्रथमवर्जं यज्ञोऽसीति त्रयाणाम् । अयं यज्ञो ममाग्ने चतुर्होतेत्यासन्नाभिमर्शनम् । प्रथमस्य पूर्ववत्प्रचारः । अनुमन्त्रणं च । सरस्वत्या अनुब्रू३हि । सरस्वतीं यज । सरस्वत्या इदं० । सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयम् । सरस्वते अनुब्रू३हि । सरस्वन्तं यज । सरस्वत इदं० । सरस्वतोऽहं देवयज्ययाऽन्नादो भूयासम् । अग्नये भगिनेऽनुब्रू३हि । अग्निं भगिनं यज । अग्नये भगिन इदं० । अग्नेर्भगिनोऽहं देव० ऽन्नादो भूयासम् । न पार्वणहोमः । नारिष्ठान्हुत्वा । ततो जुह्वाः सकृत्सकृद्गृहीत्वा । चित्तं च स्वाहा । चित्तायेदं० । चित्तिश्च स्वाहा । चित्त्या इदं० । आकूतं च स्वाहा । आकूतायेदं० । आकूतिश्च स्वाहा । आकूत्या इदं० । विज्ञातं च स्वाहा विज्ञातायेदं० । विज्ञानं च स्वाहा । विज्ञानायेदं० । मनश्च स्वाहा । मनस इदं० । शक्वरीश्च स्वाहा । शक्वरीभ्य इदं० ।

दर्शश्च स्वाहा। दर्शायेदं०। पूर्णमासश्च स्वाहा। पूर्णमासायेदं०। बृहच्च स्वाहा। बृहत इदं०। रथंतरं च स्वाहा। रथंतरायेदं०। प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः समनमन्त सर्वाः स उग्रः स हि हव्यो बभूव स्वाहा। प्रजापतय इदं०। स्विष्टकृदादि। प्रथमवर्जं चतुर्धाकरणं करोति। दक्षिणादानम्। गोमिथुननिष्क्रयद्रव्यमन्तर्वेद्यासाद्य। ब्रह्मन्ब्रह्माऽसीति। सरस्वधारमुत्समक्षीयमाणं तद्दाधार० तेन गोमिथुननिष्क्रयद्रव्येणा०। इदं वो गोमिथुननिष्क्रयद्रव्यं०। देवि दक्षिण उत्तानस्त्वाङ्गिरसः प्रतिगृह्णातु। तेनामृतत्व०। अग्नाविष्णवोरहमु०। सरस्वत्या अहमु०। सरस्वतोऽहमु०। अग्नेर्भगिनोऽहमु०। अगन्म दर्शपूर्णमासावारप्स्यमानं दर्शपूर्णमासावारप्स्यमानमगन्म संदृशस्त इत्यादि। यज्ञो बभूव यज्ञशंचमवर्णम्। सिद्धामिष्टिः संतिष्ठते।

## चतुर्होतृहोमः।

दर्शपूर्णमासावारप्स्यमानश्चतुर्होतारं मनसाऽनुद्रुत्याऽऽहवनीये संग्रहं हुत्वाऽथ दर्शपूर्णमासावारभते। यजमान आचम्य दर्शपूर्णमासावारभमाणश्चतुर्होतारं होष्यामीति संकल्प्य, अस्मिंश्चतुर्होतृहोमेऽध्वर्यु त्वामहं वृण इति वृणुयात्। अध्वर्युः— आहवनीयं विहृत्य लौकिकाज्यं जुह्वां सकृद्गृहीतं गृहीत्वा। पृथिवी होता। द्यौरध्वर्युः। रुद्रोऽग्नीत्। बृहस्पतिरुपवक्ता। इति संततं मनसा जपित्वा। अथोपांशुजपः। वाचस्पते वाचो वीर्येण। संभृततमेनायक्ष्यसे। यजमानाय वार्यम्। आसुवस्करस्मै। वाचस्पतिः सोमं पिबतु। जजनदिन्द्रमिन्द्रियाय स्वाहा। इति वाक्यशः पाठश्च। वाचस्पतये ब्रह्मण इदं०। अग्निं परित्यजेत्। इति चतुर्होतृहोमः।

## अथ दर्शपूर्णमासारम्भः।

यजमान आचम्य प्राणानायम्य परमेश्वरप्रीत्यर्थं दर्शपूर्णमासाभ्यां यक्ष्ये। तत्र प्रधानदेवताः। तत्र पौर्णमास्याम्—

१ अग्निः २ विष्णुः ३ अग्नीषोमौ।

अमावास्यायाम्—१ अग्निः २ विष्णुः ३ इन्द्राग्नी। इति असंनयतः। सन्नयतः पौर्णमास्यां पूर्ववत्। अमावास्यायाम्—अग्निः विष्णुः महेन्द्रः। आपस्तम्बानां तु पौर्णमास्याम्—अग्निः प्रजापतिः।

अमावास्यायामग्निः इन्द्राग्नी इत्यसन्नयतः । सन्नयतस्तु पौर्णमास्यामग्निः प्रजापतिः अग्नीषोमौ ।

अमावास्यायामग्निः । वर्षपर्यन्तमिन्द्रः । अनन्तरं महेन्द्रः ।

अथ पौर्णमासयागः ।

संस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय पुरोडाशमेकादशकपालमनुनिर्वपति ॥ १ ॥

समानतन्त्रमेके समामनन्ति ॥ २ ॥

समानतन्त्रपक्षाश्रयेण प्रयोगो लिख्यते—

यजमान आचम्य पवित्रपाणिः श्रीपरमेश्वरप्रीत्यर्थमैन्द्रवैमृधेन समानतन्त्रं कुर्वन्पौर्णमासेन यक्ष्ये इति प्रथमपौर्णमासयागे संकल्पः । द्वितीयादौ पौर्णमासेन यक्ष्य इति संकल्प्य यथासूत्रं यागं कुर्यादिति शम् ।

प्रथमपौर्णमासे व्याहृतिभिर्हवींष्यासादयेत् । संवत्सरे पर्यागत एताभिरेवाऽऽसादयेत् ॥

इतीष्टयः ॥



**अहं वर्ष्म सजातानां विद्युतामिव सूर्यः ।**
**इदं तमधितिष्ठामि यो मा कश्चाभिदासति ॥ १ ॥**
**( आश्व० गृ० १ । २४ । ८ )**

भाष्यम्—कुलज्ञानाचारवपुर्वयोगुणैरहं सजातानां समानानां मध्ये वर्ष्म श्रेष्ठः ज्येष्ठ इति यावत् । विद्युतां प्रकाशवतां ग्रहनक्षत्रादीनां मध्ये सूर्य इव इदम् इमं तम् । विष्टरम्, अधितिष्ठामि, अभितिष्ठामि, तं पुरुषमुद्दिश्य विष्टरवदुपद्वम् । अभिलक्षीकृत्य अभिभूय वा तिष्ठामि, अधः कृत्वा उपर्युपविशामि, यः कश्चन मा माम् । अभिदासति, उपक्षीणं कर्तुमिच्छति दसु उपक्षये ।

**अमृतोपस्तरणमसि ॥ २ ॥ ( आ० गृ० १ । २४ । १२ )**

अमृतस्य उपस्तरणम् । आच्छादनमसि, अथवा अमृतं जलरूपम् । उपस्तरणमाच्छादनमसि ।

**मित्रस्य त्वा चक्षुषा प्रतीक्षे ॥ ३ ॥ ( आ० गृ० १ । २४ । १३ )**

मित्रस्य चक्षुषा त्वा त्वां प्रतीक्षे अवलोकयामि मित्राधिष्ठितं चक्षुः अथवा मित्रस्य आदित्यस्य मित्रस्य हि शान्तं चक्षुः । अथवा हे मधुपर्क जगन्मित्रस्य सूर्यस्य चक्षुषा त्वामवलोकयामि न तु वैरिचक्षुषा अनुकूलोऽयमिति बुध्द्युत्पादनाय मित्रशब्दप्रयोग इत्याह " मित्रस्य त्वा चक्षुषा प्रेक्ष इत्याह मित्रत्वाय ॥ तै. ब्रा. ३ । २ । ४ प्रेक्षे प्रतीक्ष एतावान्भेद उभयत्र ।

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां**
**पूष्णो हस्ताभ्यां प्रतिगृह्णामि ॥ ४ ॥**
**( आ० गृ० १ । २४ । १४ )**

भाष्यम्—देवस्य त्वाशब्देन मधुपर्क उच्यते, देवस्य सवितुः प्रसवे अभ्यनुज्ञाय वर्तमानः देवेन सवित्रा प्रसूतः अश्विनोर्बाहुभ्यां न स्वाभ्याम् । अश्विनौ हि देवानामध्वर्यू पूष्णो हस्ताभ्याम् । न स्वाभ्याम् । पूषा हि देवानां भागधुग्भागपूरकः प्रतिगृह्णामि स्वी करोमि मधुपर्कमिति यावत् ।

मधुपर्कः—दधिमिश्रितं मधु दधिमिश्रितं सर्पिर्वा ।

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।**
**माध्वीर्नः सन्त्वोषधीः ॥ ५ ॥ ऋ०सं०म० १ । १४ । ९१।६**

भाष्यम्—ऋतायते ऋतं यज्ञमात्मन इच्छते यजमानाय वाता वायवो मधु माधुर्योपेतं कर्मफलं क्षरन्ति वर्षन्ति प्रयच्छन्तीत्यर्थः । तथा सिन्धवः स्यन्दनशीला नद्यः समुद्रा वा मधु माधुर्योपेतं स्वकीयं रसं क्षरन्ति, एवं नोऽस्मभ्यमोषधीः फलपाकान्ता ओषधयश्च ताश्च माध्वीर्माधुर्योपेताः सन्तु भवन्तु ।

मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः ।
मधु द्यौरस्तु नः पिता ॥

भाष्यम्—नक्तं रात्रिर्नोऽस्माकं मधु मधुमती माधुर्योपेतफलप्रदा भवतु । उतापि चोषस उषःकालोपलक्षितान्यहानि च मधुमन्ति भवन्तु । पार्थिवं रजः पृथिव्याः संबन्धी लोकोऽस्माकं मधुमत् माधुर्यविशिष्टफलयुक्तो भवतु । पिता वृष्टिप्रदानेन सर्वेषां पालयिता द्यौर्द्युलोकोऽपि मधु मधुयुक्तो भवतु ।

मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः ॥

नः अस्माकं वनस्पतिर्वनानां पालयिता यूपाभिमानी देवो मधुमान्माधुर्योपेतफलवानस्तु । तादृशं फलमस्मभ्यं प्रयच्छत्वित्यर्थः । सूर्यः सर्वस्य प्रेरकः सविता च मधुमानस्तु । गावः अग्निहोत्राद्यर्था धेनवश्च नोऽस्माकं माध्वीर्माधुर्योपेतेन पयसा युक्ता भवन्तु ।

वसवस्त्वा गायत्रेण छन्दसा भक्षयन्तु ।
( आश्व० १ । २४ । १४ )

वसवः त्वा त्वाम् गायत्रेण च्छन्दसा भक्षयन्तु । एवं सर्वत्र ।

रुद्रास्त्वा त्रैष्टुभेन छन्दसा भक्षयन्तु ।
आदित्यास्त्वा जागतेन छन्दसा भक्षयन्तु ।
विश्वे त्वा देवा आनुष्टुभेन छन्दसा भक्षयन्तु ।
भूतेभ्यस्त्वा ।

भूतेभ्यः प्राणिमात्रेभ्यस्त्वा त्वामुत्क्षिपामीत्यर्थः ।

विराजो दोहोऽसि ॥ १ । २४ । १६

प्राणधारणादिगुणैः सकलसौहित्येन विविधतया राजत इति विराजस्तस्य विराजो दोहः परिणामसारो रसः स त्वमसि तस्मात्त्वां प्राश्नामीत्यर्थः ।

विराजो दोहमशीय ॥

हे उदक तं त्वां विराजो दोहं परिणामसारभूतं रसमशीय अश्नुवै, व्याप्नुयाम् ।

मयि दोहः पद्यायै विराजः ।

किंच मयि विषये या पद्या पाद्या पादयोः साध्वी सपर्या तस्यै तदर्थं विराजो दोहः । मन्त्रसंस्कृतं जलं भवेति शेषः ।

अमृतापिधानमसि । ( १ । २४ । २१ )

अमृतरूपमाच्छादनमसि । तस्मात्त्वामाचामीत्यर्थः ।

**सत्यं यशः श्रीर्मयि श्रीः श्रयताम् । ( १ । २४ । २२ )**

सत्यं यशः श्रीः मयि श्रयताम्, आश्रयं करोतु इत्यर्थः ।

**माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः ।**

**प्रनुवोचं चिकितुषे जनाय मागामनागामदितिं वधिष्ट ॥**

अमृतस्य क्षीरस्य नाभिराश्रयः नु वितर्के छन्दासि व्यवहिताश्चेत्युक्तेरुपसर्गस्य वोचमित्यत्रान्वयः प्रवोचं ब्रवीमि, चिकितुषे, चेतनावते जनाय यूयम् इमां गाम्। मा वधिष्ट मा घ्नताम् । किंभूताम् अनागामनपराधाम् । अदितिं देवमातरं पयोदानात् । माता रुद्राणामित्यादिस्पष्टार्थम् ।

**यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा ।**

**तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सह ॥ ( तै० ब्रा० १।२।१ )**

हे अरणे त्वे त्वयि निमित्तभूतायां सत्यां शमीगर्भो योऽश्वत्थः स च तया शम्या समवेत आरुरोह समारुह्य प्रवृद्धस्तं तादृशमश्वत्थं ते त्वदर्थं ब्रह्मणा मन्त्रेण यज्ञियैः केतुभिर्यज्ञार्हैर्लाञ्छनैरभिमन्त्रणादिवक्ष्यमाणसंस्कारैश्च सह हरामि यज्ञभूमावानयामि ।

अत्र केतुभिरितिपदेन कैश्चित्पात्राणि इत्युक्त्वा तेषामपि अभिमर्शः प्रयुज्यते ।

**अश्वत्थाद्धव्यवाहाद्धि जातामग्नेस्तनूं यज्ञियाꣳ संभरामि ।**

**शान्तयोनिꣳ शमीगर्भमग्नये प्रजनयितवे ॥ ( १ । २ । १ )**

हव्यं वहतीति हव्यवाडग्निस्तद्रूपोऽयमश्वत्थोऽश्वरूपं धृत्वाऽग्निस्तस्मिन्वृक्षे प्रविश्य संवत्सरमवस्थितत्वात्तस्मादश्वत्थाज्जातामुत्पन्नामरणीं संभरामि संपादयामि । कीदृशीम् । अग्नेर्यज्ञियां तनूं लौकिकदाहपाकादिहेतुर्यज्ञिया तनूः । अरणिरूपा तु या यज्ञार्हा शान्तयोनिं दाहप्रकाशाद्यनभिव्यक्त्या शान्तामग्न्युत्पादकत्वेन योनिश्च शमीगर्भं शमीवृक्षवेष्टिताश्वत्थवृक्षजन्यत्वेन शमीगर्भमीदृशीमरणिमग्नये प्रजनयितवेऽग्नेरुत्पादनार्थं संभरामीति पूर्वत्रान्वयः ।

**आयुर्मयि धेह्यायुर्यजमाने ॥ ( आप० श्रौ० सू० ५ । १ । ४ )**

हे अरणे मयि यजमाने च आयुर्धारय, आयुष्मन्तं कुरु इति अध्वर्युः प्रार्थयते ।

**वैश्वानरस्य रूपं पृथिव्यां परिस्रसा ।**

**स्योनमा विशन्तु नः ॥ ( तै० ब्रा० १ । २ । १ )**

सा० भा०—विश्वेषां नराणां हितकारी वैश्वानरोऽग्निस्तस्याग्नेः स्वरूपं पृथिव्यां परिस्रसा परितः पारयन्त्यः सिकताः स्योनं सुखं यथा भवति तथा नोऽस्माकं देवयजनमाविशन्तु ।

**यदिदं दिवो यददः पृथिव्याः संजज्ञाने रोदसी संबभूवतुः।**
**ऊषान्कृष्णमवतु कृष्णमूषा इहोभयोर्यज्ञियमागामिष्ठाः ॥५॥(१।२।१)**

सा० भा०—दिवः संबन्धि यदिदमूषररूपं पृथिव्यां स्थापितं पृथिव्याः संबन्धि यददः कृष्णरूपं चन्द्रमसि स्थापितं तत्र यद्रूपद्वयं संजज्ञाने सम्यगवगच्छन्त्यौ रोदसी द्यावा पृथिव्यौ संबभूवतुः परस्परसंगते अभूताम्। तत्र यत्कृष्णरूपं द्यावापृथिवीरूपमस्ति तदेतदूषान् दिवः स्वरूपभूतानवतु रक्षतु। ते चोषास्तत्कृष्णमवन्तु। उभयोर्द्यावापृथिव्योः संबन्धि यज्ञियं यज्ञयोग्यमंशद्वयमिह देवयजन आगमिष्ठा आगच्छतु।

**ऊतीः कुर्वाणो यत्पृथिवीमचरो गुहाकार माखुरूपं प्रतीत्य।**
**तत्ते न्यक्तमिह संभरन्तः शतं जीवेम शरदः सवीराः॥६॥(१।२।१)**

सा० भा०—हे अग्ने त्वमाखुरूपं मूषकरूपं स्वीकृत्य गुहाकारं पर्वतगुहाया आकारो यथा भवति तथोतीर्बिलानि कुर्वाणः पृथिवीमचरो भूम्यां चरितवानसीति यत्तत्र न्यक्तं निगूढं ते त्वदीयं सारमिह देवयजने संभरन्तः संपादयन्तो वयं सवीराः पुत्रभृत्यसहिताः शरदः शतं शतसंख्याकान्संवत्सरान् जीवेम सवीराः वीरैः सहिताः क्षत्रियमूर्धन्यसहिता इति वयं राजन्यवान् ब्राह्मण इति ब्राह्मणस्य विशेषितत्वात्तथा प्रार्थना अग्नेर्युक्ता इति उत्पश्यामः। वीरशब्दोऽपि तत्रैव योद्धृतमे रूढः। इत्यनवद्यम्।

**ऊर्जं पृथिव्या रसमाभरन्तः शतं जीवेम शरदः पुरूचीः।**
**वम्रीभिरनुवित्तं गुहासु श्रोत्रं त उर्व्यबधिरा भवामः॥७॥(१।२।१)**

सा० भा०—पृथिव्या रसः सारमूर्जं क्षीरादिवत्समानं वल्मीकवपारूपं संभरन्तो वयं शतं शरदो जीवेम। कीदृशीः शरदः पुरुचीः पूरूणि बहूनि भोग्यान्यञ्चन्ति संपादयन्तीति पुरूच्यस्तादृशीः। कीदृशं रसं गुहासु भूछिद्रेषु वम्रीभिः पिपीलिकासदृशीभिरनुवित्तमनुक्रमेण लब्धम्। हे उर्वि तच्छ्रोत्रं त्वदीयश्रोत्रस्थानीयां वल्मीकवपामाहृत्य वयमबधिरा अनुपहतश्रोत्रेन्द्रिया भूयास्म।

**प्रजापतिसृष्टानां प्रजानां क्षुधोपहत्यै सुवितं नो अस्तु।**
**उपप्रभिन्नमिषमूर्जं प्रजाभ्यः सूदं गृहेभ्यो रसमाभरामि॥८॥(१।२।१)**

सा० भा०—याः प्रजाः प्रजापतिसृष्टास्तासां क्षुन्निवारणाय नोऽस्मत्संबन्धीदं कर्दमरूपं सुवितं सुष्ठु प्राप्तमस्तु। येयाविडन्नं याचोर्ग्रसः, उभयं प्रजाभ्यः प्रजार्थमुपप्रभिन्नमस्यन्तसामिप्यं यथा भवति तथैकीभूतं तादृशं सूदरसं पङ्करूपं गृहेभ्यो वहनीनामायतनार्थमाहरामि इहानयामि।

**यस्य रूपं बिभ्रदिमामविन्दद्गुहाप्रविष्टा सरिरस्य मध्ये ।**
**तस्येदं विहतमाभरन्तोऽच्छम्बट्कारमस्यां विधेम ॥९॥ ( १।२।१ )**

सा० भा०—पुरा प्रजापतिर्यस्य वराहस्य रूपं बिभ्रद्धार्यमाण इमां पृथिवीमविन्ददलभत । कीदृशीं सरिरस्य मध्ये प्रलयकालीनजलस्यान्तर्गुहा गोप्यं स्थानं पातालरूपं प्रविष्टाम् । तस्य वराहस्य विहतं पोत्रोत्खातमिदं मृद्द्रव्यमाभरन्त आनयन्तो वयमस्यां पृथिव्यामच्छंवट्कारं वैयर्थ्यं यथा न भवति तथा विधेम कर्माण्यनुतिष्ठेम । सरिरं नाम सलिलं जलम् ।

**याभिरदृ॰हज्जगतः प्रतिष्ठामुर्वीमिमां विश्वजनस्य भर्त्रीम् ।**
**ता नः शर्कराः सन्तु सर्वाः ॥ १० ॥ ( १ । २ । १ )**

सा० भा०—जगतः स्थावरादेः प्रतिष्ठामाश्रयभूतां विश्वजनस्य भर्त्रीं सस्यादिद्वारा सर्वजनस्य पोषयित्रीमिमामुर्वीं याभिः शर्कराभिरदृ॰हद्दृढीकृतवान प्रजापतिः । शर्कराः क्षुद्रपाषाणाः ।

**अग्ने रेतश्चन्द्र॰ हिरण्यमद्भ्यः संभूतममृतं प्रजासु ।**
**तत्संभरन्नुत्तरतो निधायातिप्रयच्छन्दुरितिं तरेयम् ॥११॥ (१।२।१)**

सा० भा०—तद्धिरण्यं तत्संभरन्संपादयन्नग्नेर्बीभत्सानिवारणायोत्तरपार्श्वे तद्धिरण्यं रजतमतिप्रयच्छन्नहं दुरितिं दुर्गतिं तरेयम् ।

**अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठः संवत्सरं देवेभ्यो निलाय ।**
**तत्ते न्यक्तामिह संभरन्तः शतं जीवेम शरदः सवीराः॥१२॥(१।२।१)**

सा० भा०—हे अग्ने त्वं यद्यदाश्वः संस्तदीयं रूपं च सम्यक्कृत्वा देवेभ्यो निलाय गूढोपक्रम्य संवत्सरं निरन्तरमश्वत्थे स्थितवानसि । तत्तदा ते त्वदीयं न्यक्तमश्वत्थे निगूढं तेजः सारमिह यज्ञभूमौ संभरन्तः संपादयन्तो वयं सवीराः पुत्रभृत्यसहिताः शतं शरदो जीवेम । अन्यार्थः पूर्ववदवगन्तव्यः ।

**ऊर्जः पृथिव्या अध्युत्थितोऽसि वनस्पते शतवल्शो विरोह ।**
**त्वया वयमिषमूर्जं मदन्तो रायस्पोषेण समिषा मदेम॥१३(तै.ब्रा.१।२।१)**

सा० भा०—हे वनस्पत उदुम्बरवृक्ष ऊर्जो रसनिमित्तात्तत्सिद्धये पृथिव्या अध्युत्थितोऽसि भूमेरुपरि प्ररूढोऽसि अतोऽस्माभिश्छिन्नोऽपि पुनः शतवल्शः शतशाखायुक्तो विरोह विशेषेण प्रादुर्भव । त्वयोपकृता वयमिषमन्नमूर्जं रसं च मदन्तो हर्षपुरःसरं प्राप्नुवन्तो रायस्पोषेण धनपुष्ट्या समीचीनान्नेन युक्ता मदेम पुनरपि हृष्यास्म ।

**गायत्रिया ह्रियमाणस्य यत्ते पर्णमपतत्तृतीयस्यै दिवोऽधि ।**
**सोऽयं पर्णः सोमपर्णाद्धि जातस्ततो हरामि सोमपीथस्यावरुध्यै॥१४॥**
**देवानां ब्रह्मवादं वदतां यदुपाशृणोः सुश्रवा वै श्रुतोऽसि ।**
**ततो मामाविशतु ब्रह्मवर्चसं तत्संभर॰स्तदवरुन्धीय साक्षात् ।**

सा० भा०—हे सोम तृतीयस्यै दिवोऽधीमं लोकमारभ्य गणनायां तृतीयस्य द्युलोकस्योपरि गायत्रिया ह्रियमाणस्य गायत्रीदेवतया बलाद्ह्रियमाणस्य ते तव यत्पर्णं भूमावपतत्सोऽयं पर्णः पलाशवृक्षः स च सोमपर्णाज्जात इति पर्णनामधेयेनैव प्रसिद्धः । ततस्तस्मात्कारणात्सोमपीथस्यावरुध्यै सोमपानस्य सिद्धये हरामि त्वामिहानयामि । किंच पलाशवृक्षच्छायामुपविश्य ब्रह्मवादं वदतामात्मविषयं संवादं कुर्वतां देवानां संबन्धं ब्रह्मवादं यद्यस्मात्कारणात्त्वमुपाशृणोः समीपे स्थित्वा श्रुतवानासि । अत एव सुश्रवा इति नाम्नैव त्वं श्रुतोऽसि प्रसिद्धोऽसि तत्तस्मात्कारणात्त्वदानयने प्रवृत्तं मां ब्रह्मवर्चसमाविशतु । तत्तादृशं पर्णाख्यं संभरन्नहं ब्रह्मवर्चसं सक्षादवरुन्धीय विलम्बमन्तरेण प्राप्नुयाम् ।

यया ते सृष्टस्याग्नेर्हेतिमशमयत्प्रजापतिः ।
तामिमामप्रदाहाय शमीꣳ शान्त्यै हराम्यहम् ॥१५॥ (१।२।१)

सा० भा०—हे शमीवृक्ष ते त्वदीयया यया शाखया प्रजापतिः स्वसृष्टस्याग्नेर्हेतिं मद्दाहरूपमायुधमशमयत्तामिमां शमीं पूर्वस्य दाहस्य शान्त्या इत ऊर्ध्वमप्रदाहाय च हरामि यज्ञभूमावानयामि ।

यत्ते सृष्टस्य यतो विकङ्कतं भा आर्च्छज्जातवेदः ।
तया भासा संमित उरुं नो लोकमनुप्रभाहि ॥ १६ ॥

सा० भा०—हे जातवेदः प्रजापतिना सृष्टस्य यतः शीघ्रं गच्छतस्ते तव भा या दीप्तिर्विकङ्कतवृक्षमार्छत् प्राप्नोत्तया भासा संयुक्तः सन्नोऽस्मदर्थमुरुं विस्तीर्णं लोकं स्थानमनुप्रभाहि अनुक्रमेण प्रकाशय ।

यत्ते तान्तस्य हृदयमाच्छिन्दज्जातवेदो मरुतोऽद्भिस्तमयित्वा ।
एतत्ते तदश्नेः संभरामि सात्मा अग्ने सहृदयो भवेह ॥१७॥ (१।२।१)

सा० भा०—हे जातवेदः पुरा कदाचिन्मरुतो देवा विद्वेषादद्भिस्त्वदीयां तां ज्वालां तमयित्वा शमयित्वा म्लानिं प्राप्य तान्तस्य म्लानिं प्राप्तस्य ते तव यद्धृदयमाच्छिन्दंस्तदेतत्ते हृदयमश्नेः शकाशादहं संभरामि । छिन्नस्य हृदयस्याशनौ प्रविष्टत्वात् । ततः संभरणं युक्तम् । तस्य हृदयस्य मया संभृतत्वादिह देवयजने हेऽग्ने त्वं सात्मा सत्स्वरूपः सहृदयो हृदययुक्तश्च भव ।

यत्पर्यपश्यत्सारिरस्य मध्ये उर्वीमपश्यज्जगतः प्रतिष्ठाम् ।
तत्पुष्करस्यायतनाद्धि जातं पर्णं पृथिव्याः प्रथनꣳहरामि॥१८॥१।२।१

सा० भा०—जगतः स्थावरजङ्गमरूपस्य प्रतिष्ठामाधारभूतामुर्वीं लब्धुकामः प्रजापतिः सरिरस्य मध्ये प्रलयकालीनजलस्यान्तर्यत्पुष्करपर्णमपश्यत्तत्पुष्करस्य पर्णं हरामि देवयजनभूमौ नयामि । कीदृशमायतनाद्धि जलमध्ये निमग्नादाधारादुत्पन्नम् । हिशब्दो ब्राह्मणप्रसिद्धिं सूचयति । तथा पृथिव्याः प्रथमभूमेर्विस्तारस्थानम् ।

यं त्वा समभरं जातवेदो यथाशरीरं भूतेषु न्यक्तम् ।
स संभृतः सीद शिवः प्रजाभ्य उरुं नो लोकमनुनेषि विद्वान् ॥१९॥
( तै० ब्रा० १ । २ । १ )

सा० भा०—हे जातवेदो यं त्वामृत्विजः समभरन्संभारयुक्तं कृतवन्तः । कीदृशं त्वां भूतेषु प्राणिषु यथाशरीरं तच्छरीरमनतिक्रम्य न्यक्तमौदर्याग्निरूपेण निमूढं स तादृशस्त्वं संभृतः संभारयुक्तः प्रजाभ्यः शिवः प्रजानां सुखप्रदो भूत्वा सीदेह देवयजनस्थानमुपाविश । विद्वान्सर्वलोकाभिज्ञस्त्वं नोऽस्मदर्थमुरुं विस्तीर्णं लोकमनुनेष्यनुक्रमेण संपादय ।

उद्धन्यमानमस्या अमेध्यमपपाप्मान यजमानस्य सन्तु ।
शिवा नः सन्तु प्रदिशश्चतस्रः शंनोमाता पृथिवी तोकसाता ॥२०॥
( १ । २ । १ )

सा० भा०—अस्याः पृथिव्याः संबन्धि यत्स्थानं निष्ठीवनादिभिरुपहतत्वादमेध्यं यथायोग्यं तदिदानीमुद्धन्यमानं सद्यजमानस्य पाप्मानमपहन्तु । प्राच्यादिचतस्रः प्रकृष्टा दिशो नोऽस्मान्प्रति शिवाः सुखप्रदाः सन्तु तोकसाता तोकसातयेऽपत्यलाभाय पृथिवी माता नोऽस्माकं शं सुखं करोतु ।

शं नो देवीरभिष्टय आपो भवन्तु पीतये ।
शंयोरभिस्रवन्तु नः ॥ २१ ॥ ( १ । २ । १ )

सा० भा०—आपो देवीरिमा जनदेवता नोऽस्माकमभिष्टयेऽभीष्टप्राप्त्यर्थं पीतये पानाय शं भवन्तु सुखप्रदा भवन्तु । किंच नोऽस्माकं शं सुखं संपादयितुं योः दुःखं पृथक्कर्तुं चाभिस्रवन्तु सर्वतः प्रवर्तन्ताम् ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां
ब्रह्मणे प्राणाय जुष्टं निर्वपामि ॥ २२ ॥ ( तै० सं० १ । १ । ४ )

ब्राह्मणव्याख्यानम्——देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै । ब्रह्मणे प्राणाय प्राणभूताय ब्रह्मणे जुष्टं निर्वपामीत्याह । ब्रह्मण एवैनां जुष्टं निर्वपति ।

सा० भा०—एनान्व्रीहीन् (तण्डुलान्वा) प्रियं हविर्यथा भवति तथा निर्वपति एवं चतुर्ष्वपि मन्त्रेषु अवगन्तव्यम् ।

प्रवेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे ।
यतो भयमभयं तन्नो अस्त्वव देवान्यजे हेड्यान्स्वाहा ॥२३॥
( १ । २ । १ )

सा० भा०—वेधसे कर्मद्वारा जगतो धात्रे कवये विदुषे सर्वज्ञाय मेध्याय यज्ञयोग्याय वृषभाय देवश्रेष्ठाय वृष्णे कामानां वर्षयित्रे वह्नये वन्दारु वचो नमस्कारशीलं वाक्यमस्माभिः प्रारब्धव्यम् । प्राणिनां यतो यस्मान्नरकादुर्भयं

तत्तस्मान्नोऽस्माकमभयमस्तु । हेडश्चान्क्रोधयोग्यानस्मद्विरोधिनो देवानवयजे विनाशयामि । " न ममति स्वस्वतायाः ( स्वसत्तायाः ) निवृत्तिमपि कीर्तयेत् " इतिवार्तिककारोक्त्या यजमानेन सर्वत्र उद्देशत्यागौ वक्तव्यौ । सूत्रकारास्त्वत्र न सूत्रयांबभूवुरित्यपरम् ।

**चित्रियादश्वत्थात्संभृता बृहत्यः शरीरमभिसꣳस्कृताः स्थ ।**
**प्रजापतिना यज्ञमुखेन संमितास्तिस्रस्त्रिवृद्भिर्मिथुनाः प्रजात्यै ॥२४॥**
**( १ । २ । १ )**

सा० भा०—ग्रामतडागादिचित्यप्रभृतः प्रसिद्धोऽश्वत्थश्चित्रियः । हे समिधो यूयं चित्रियादश्वत्थात्संभृता मया संपादिता अत एव बृहत्यो महत्यः पूज्यास्तथा शरीरमभिसंस्कृताः स्थ चरुगते महत्याज्ये विवर्तनेन कृत्स्नं स्वशरीरमभिव्याप्य संस्कारयुक्ता भवथ । किंच प्रजापतिरूपेण यज्ञपुरुषमुखेण प्रादेशमात्रेण संमितास्तुल्यास्तादृश्यास्तिस्रः समिधस्त्रिवृद्भिर्भविष्यदाहवनीयादिरूपेण त्रिगुणैरग्निभिः सह प्रजात्यै मिथुनाः प्रजोत्पादनार्थं मिथुनीभूताः ।

**समिधाऽग्निं दुवस्यत घृतैर्बोधयतातिथिम् ।**
**अस्मिन्हव्या जुहोतन स्वाहा ॥ २५ ॥ ( १ । २ । १ )**

सा० भा०—हे ऋत्विजोऽनया प्रक्षिप्यमाणया समिधा अग्निं दुवस्यत प्रीणयत अतिथिं वैश्वदेवान्ते समागतं ब्राह्मणमिव पूजनीयमेनमग्निं घृतैर्बोधयत दीपयत अस्मिन्नग्नौ हव्या हवींष्या जुहोतन सर्वत्र जुहुत ॥

**उपत्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम ॥२६॥**
**( १ । २ । १ )**

सा०भा०—हे हर्यत भजनीय वह्ने हविष्मतीर्ब्रह्मौदनाख्यहविष्मत्यो घृताचीर्घृताच्यो घृतसंपृक्ता एताः समिधस्त्वामुपयन्तु । मम समिधो जुषस्व प्रीत्या सेवस्व ।

**तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ॥२७॥**
**( १ । २ । १ )**

सा० भा०—हेऽङ्गिरोऽङ्गसौष्ठवयुक्त वह्ने तं तादृशं सर्वकर्मसु प्रसिद्धं त्वां समिद्भिर्घृतेन च वर्धयामसि वयं वर्धयामः । हे यविष्ठ्य युवतमाग्ने बृहच्छोचा महत्त्वं यथा भवति तथा दीप्यस्व ।

**प्रजा ॒अग्ने संवासयाशाश्च पशुभिः सह ।**
**राष्ट्राण्यस्मा आधेहि यान्या[illegible]वितुः सवे ॥२८॥ ( १।२।१ )**

सा० भा०—तत्राग्निशब्देनाजः संबो[illegible]त्याग्निसंबन्धित्वात् । " आग्नेयी वा एषा यदजा " इति श्रुत्यन्तरादग्निना सह प्रजापतिमुखादुत्पन्नत्वाच्च । हे अग्नेऽजात्मन्प्रजा अस्मदीयाः पशुभिः सहाशा दिग्वर्तिनः प्राणिनश्च संवासनेन पालय । यानि राष्ट्राणि सवितुः सवे परमेश्वरस्याज्ञायां पूर्वमासंस्तानि राष्ट्राणि अस्मै यजमानायाधेहि सर्वतः संपादय ।

शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम् ।
उभयोर्लोकयोर्ऋद्ध्वाति मृत्युं तराम्यहम् ॥ २९ ॥
( तै० ब्रा० १ । २ । १ ) ।

सा० भा०—अहं शल्कैः काष्ठलेशैः( काष्ठशकलैः ) अग्निमिन्धानः प्रज्वालयन्नुभौ लोकावेतल्लोकपरलोकौ सनें संजयेयम् । तयोरुभयोर्लोकयोर्ऋद्ध्वा समृद्धो भूत्वा मृत्युमहमतिशयेन तरामि ।

जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्जनिष्यते ।
अग्निमश्वत्थादधि हव्यवाहꣳ शमीगर्भाज्जनयन्यो मयोभूः ॥३०॥
( १ । २ । १ ) ।

सा० भा०—हे जातवेदो ब्रह्मौदनिकाग्ने भुवनस्य रेतः सर्वलोकस्य कारणभूतमाधातव्याग्निरूपमिह सिञ्च, अनयोररण्योर्निषिञ्च । यद्रेतस्तपसोऽस्मात्संतापनाज्जनिष्यत उत्पत्स्यते तादृशं रेतः सिञ्चेति पूर्वत्रान्वयः ।

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥ ३१ ॥

सा० भा०—हे जनयितव्याग्नेऽयमरणिद्वयसंबस्ते तवोत्पत्त्यर्थमृत्वियो योनिर्ऋतुयुक्तमुत्पत्तिस्थानं यतो योनेर्जातस्त्वमरोचथा लोके दीप्तिमानासीः । योनिमेतदरणिरूपं जानन्नारोह । अथानन्तरं नोऽस्माकं रयिं धनं वर्धय ।

अग्नी रक्षाꣳसि सेधति शुक्रशोचिरमर्त्यः ।
शुचिः पावक ईड्यः ॥३२॥ ( तै० ब्रा० २ । ४ । १ ) ।

सा० भा०—अयमग्नी रक्षांसि प्रतिषेधति । कीदृशोऽग्निः, शुक्रशोचिर्निर्मलदीप्तिरमर्त्यो मरणरहितः शुचिः शुद्धः पावकोऽन्येषामपि शोधक ईड्यः स्तुत्यः ।

मही विश्पत्नी सदने ऋतस्यार्वाची एतं धरुणे रयीणाम् ।
अन्तर्वत्नी जन्यं जातवेदसमध्वराणां जनयथः पुरोगाम् ॥३३॥
(१ । २ । १) ।

सा० भा०—रयीणां धनानां धरुणे धारयित्र्यौ हेऽरणी मही महत्यौ पूजनीये विश्पत्नी प्रजानां पालयित्र्यावर्वाची अभिमुखे सत्यौ ऋतस्य सदने यज्ञस्य स्थाने एतमागच्छतम् । अन्तर्वत्नी गर्भिण्यौ युवां जन्यं जनयितारमग्निं जातवेदसं जातानां वेदितारमध्वराणां पुरोगां यज्ञानामग्रगामिणं जनयथ उत्पादयतम् ।

दोह्या च ते दुग्धभृच्चोर्वरी ते ते भागधेयं प्रयच्छामि ॥३४॥
( आश्व० श्रौ० ५ । ८ । ७ ) ।

+ ये अरणी दोह्या दुग्धभृत् । उर्वरीति द्विवचनार्थ एकवचनमार्षम् । दोह्या कामपूरणसमर्थे दुग्धं दुग्धवदाकृष्टं मथितमित्यर्थः । अग्निं( दुग्धं )बिभर्तीति दुग्धभृत् । उर्वरी विपुलसामर्थ्ये ते ते प्रसिद्धे अरणी ते तुभ्यं प्रयच्छामि ।

+ एतच्चिह्नाङ्कितं भाष्यं वाजसनेयसंहिताभाष्यकृद्भिः पाठकोपाह्वैः श्रीधरशर्मभि

आरोहतꣳ शक्करीर्ममर्तें नाग्न आयुषा वर्चसा सह।
ज्योग्जीवन्त उत्तरामुत्तराꣳ समां दर्शमहं पूर्णमासं
यज्ञं यथा यजै॥ ३५॥ (तै० ब्रा० १।२।१)।

सा० भा०—हेऽरणी मम मदीयाः शक्करीः शक्तियुक्ता अङ्गुलयो या सन्ति तासां दशतं दशसंख्यायुक्तवर्गमारोहतम्। हे अग्नेऽरणिगर्भस्य त्वमपि ऋते न यज्ञेनाऽऽयुषाऽस्मदीयेन दीर्घायुष्येण व सा बलेन दशतमारोह। वयं ज्योग्दीर्घकालं जीवन्त उत्तरामुत्तरां समामुत्तरोत्तरसंवत्सरे विच्छेदमन्तरेण दर्शं पूर्णमासं च यज्ञं यथा यजै यथा यजामि तथा त्वमारोहेति पूर्वत्रान्वयः।

ऋत्वियवती स्थो अग्निरेतसौ गर्भं दधाथां ते वामहं ददे।
तत्सत्यं यद्वीरं बिभृथो वीरं जनयिष्यथः।
ते मत्प्रातः प्रजनयिष्येथे ते मा प्रजाते प्रजनयिष्यथः।
प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोके॥ ३६॥ (तै० ब्रा० १।२।१)।

सा० भा०—हेऽरणी युवामृत्वियवती ऋतुः प्राप्तोऽस्येत्यृत्वियो योनिः स ययोररण्योस्ते ऋत्वियवती प्रजननाभिमुखगर्भवत्यौ। अग्निरेव रेतोरूपेण गर्भे ययोस्ते अग्निरेतसौ तादृश्यौ स्थो भवथः। तादृश्यौ युवां गर्भं दधाथां गर्भं पोषयन्तं (तं) ते तादृश्यौ वां युवामहं दद आदत्तवानस्मि। ते युवां वीरं कर्म सुशूरं पुत्रं बिभृथो धारयथः। अतो वीरमेव जनयिष्यथ इति यत्तत्सत्यं न तु मिथ्या ते युवां मन्मतो(त्तो) निमित्तभूतात्प्रातः प्रजनयिष्येथे परेद्युः प्रातःकाले सर्वथ बह्निमुत्पादयिष्यथः। प्रजाते वह्निमुत्पादितवत्यौ ते युवामपि प्रजनयिष्यथः प्रजनयितारं करिष्यथः। अतः स्वर्गे लोके प्रजया पशुभिर्ब्रह्मवर्चसेन च युक्तो भविष्यामीति शेषः।

मयि गृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय।
मयि प्रजां मयि वर्चो दधाम्यरिष्टाः स्याम तनुवा सुवीराः॥ ३७॥
(तै० सं० ५।७।९)।

सा० भा०—अग्रे परकीयस्याग्नेश्चयनात्पूर्वमग्निं स्वकीयं पूर्वसिद्धं वह्निं गृह्णामि स्वात्मन्येव यथा स्थिरो भवति तथा स्वी करोमि। किमर्थं, धनपुष्टिशोभनापत्यशोभनभृत्या( वीर्या )र्थमस्य गृहीतस्याग्नेः प्रसादात्प्रजामुत्पत्स्यमान पुत्रादिकां मयि स्थापयामि। वर्चः शारीरं बलं च मयि स्थापयामि। सुवीरा शोभनपुत्रभृत्योपेता वयं तनुवा मदीयेन शरीरेण सहारिष्टा हिंसारहिताः स्याम।

यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्याꣳ आविवेश।
तमात्मन्परिगृह्णीमहे वयं मासो अस्माꣳ अवहाय परागात्॥३८॥
(तै० सं० ५।७।९)।

सा० भा०—हे पितरः पालका अस्मच्छरीरगता भूतेन्द्रियविशेषा अमर्त्यो मरणरहितो योऽग्निर्हृत्स्वन्तर्हृदयाद्यवयवेषु मध्ये मर्त्यान्मरणयोग्यानस्माना॥वि-वेश सर्वतः प्रविष्टस्तमाग्निं वयमात्मन्परिगृह्णीमहे स्वशरीर एव स्थिरं धारयामः । सोऽग्निरस्मानवहाय परित्यज्य मा परागादन्यत्र मा गच्छतु ।

चयनप्रकरणस्थे इमे ऋचे उत्कृष्य भगवता आपस्तम्बेन आधानप्रकरणे अध्व-र्युयजमानयोर्जपार्थं विहिते। तत्र चयनात्पूर्वमित्यत्र आधानात्पूर्वमिति व्याख्येयम् ।

अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः ।
अदादिदं यमो वसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै ॥ ३९ ॥
( तै० आ० १ । २ । १ ) ।

सा० भा०—यमपुरुषाः संबोध्यन्ते । हे यमपुरुषा अत्रास्मिन्देशे पुराणा ये यूयं स्थ नूतनाश्च ये यूयं स्थ ते सर्वेऽप्यतो देशादपेतापगच्छत । वीत परस्परं वियुक्ता गच्छत । पुनरपि विदूरं सर्पत । यमो राजेदमवस्थानमदाद्यजमानाय दत्तवान् । पितरश्चेमं लोकं स्थानविशेषमस्मै यजमानार्थमक्रन्कृतवन्तः ।

अग्नेर्भस्मास्यग्नेः पुरीषमसि ॥ ४० ॥ ( १ । २ । १ ) ।

सा० भा०—हे सिकतेऽग्नेर्भस्म भासमानहेतुस्त्वमसि । तथाऽग्नेः पुरीषं पूरण-हेतुस्त्वमसि ।

संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात् ॥ ४१ ॥
( १ । २ । १ ) ।

सा० भा०—हे ऊष संज्ञानं सम्यग्ज्ञानहेतुः कामधरणं कामानां धरण-हेतुश्च त्वमसि । ते त्वदीयं यत्कामधारणं(ण) सामर्थ्यं तन्मय्यपि भूयात् ।

यददश्चन्द्रमसि कृष्णं तदिहास्तु ॥४२॥ ( तै० ब्रा० १।१।३) ।

नायं मन्त्रस्तथाऽपि सूत्रकारेण ऊषनिवपनानन्तरं ध्यानं विहितं तत्प्रकारोऽयं ब्राह्मणे विधीयते । यत्—अदः । इदं भूसारं दृश्यमानं चन्द्रमसि कलङ्करूपं कृष्णं तस्माद्भूसारत्वादूषाणां निवपनकाले तत्कृष्णरूपमत्र तिष्ठतीति ध्यायेत्। तथा सति द्युलोकसंबन्धिन्यूषे भूलोकसंबन्धिनि कृष्णे चाग्निराहितो भवतीति विद्यारण्यचरणा बभाषिरे ।

उदेह्यग्ने अधि मातुः पृथिव्या विश आविश महतः सधस्थात्
आखुं त्वा ये दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपाम् ॥ ४३ ॥
( आ० श्रौ० ५ । ९ । ८ ) ।

+ हे अग्ने ! अधिमातुः पृथिव्या उदेहि उद्गच्छ । तथा सधस्थात्पृथिव्या सह विद्यमानान्महत उदकात् 'महदित्युदकनाम' इति निघण्टावेकशतसंख्याको-दकनामसु पठितम्। विश गच्छ। आविश आगच्छ। निरङ्कुशप्रवेशेनाऽऽखुना वह्निरुपमीयते । वडवानलस्योदधौ स्थितिः प्रसिद्धा । भुवनस्य गोपां रक्षकं हव्यवाहं त्वां देवयन्तो यजमाना आखुम्, आखनति विदारयति पापानीत्याखुस्तं पापविदारणं त्वां दधिर आश्रितवन्तः ।

यत्पृथिव्या अनामृतं संबभूव त्वे सचा ।
तदग्निरग्नयेऽददात्तस्मिन्नाधीयतामयम् ॥ ४४ ॥
( आप० श्रौ० ५ । १ । ८ ) ।

+ यत्पृथिव्या सचा सहानामृतममरणधर्मकं निर्जलं वा वल्मीकं त्वे अन्यस्मै कीटसर्पाद्यर्थं संबभूव उदपद्यत । तद्वल्मीकवपासंभाररूपमग्निर्लक्षणया तदुपासको यजमानः। अग्नयेऽन्यर्थमददादगृह्णात्तस्मिन्वल्मीकवपारूपसंभारेऽयमाग्निराधीयतां स्थाप्यताम् ।

उत्समुद्रान्मधुमाꣳ ऊर्मिरागात्साम्राज्याय प्रतरां दधानः ।
अमी च ये मघवानो वयं चेषमूर्जमधमत्संभरेम[1] ॥ ४५ ॥
( आप० श्रौ० ५ । १ । १० ) ।

+ समुद्रादविदासिनो ह्रदात् साम्राज्याय साम्राज्यं प्रतरामुत्कृष्टतरं दधानो धारयन् । मधुमान् मधुररसयत ऊर्मिस्तरङ्ग उदागादूर्ध्वमयात् । तमधमदकम्प्यम् । ऊर्जं बलवन्तमिषं रसं येऽमी मघवान इन्द्रप्रमुखा देवा धनवन्तो वा वयं च संभरेम पूरयेम । अनेन संभारे स्थापितेन वह्निना बलवद्रसोपलब्धिरिति तात्पर्यम् ।

इयत्यग्र आसीः ॥ ४६ ॥

+हे वराहविहते मृत्स्ने अग्रे सृष्ट्युत्पत्तिकाले त्वमियती प्रादेशमात्रपरिमाणा आसीः ।

अदो देवी प्रथमाना पृथग्यद्देवैर्न्युप्ता व्यसर्पो महित्वा ।
अदृꣳहथाः शर्कराभिस्त्रिविष्टप्यजयो लोकान्प्रदिशश्चतस्रः ॥ ४७ ॥
( आप० श्रौ० ५ । १ । ११ ) ।

+ प्रथमाना विस्तृता देवी दीप्यमाना पृथिवी देवैः पृथङ्न्युप्ता स्थापितेति यददः कृत्यं त्वा तव महि यशो व्यसर्पः व्यसृपदप्रथयदित्यर्थः । त्वं शर्कराभिरदृंहथा दृढा अभूरयं त्रिविष्टप्यजयस्त्रिविष्टपे स्वर्गे भवो दिव्य इति यावत् । जयश्चतस्रः प्रदिशश्चतुर्दिक्स्थान् लोकान् व्याप्नोतीति शेषः ।

ऋतꣳ स्तृणामि पुरीषं पृथिव्यामृतेऽध्यग्निमादधे ।
सत्येऽध्याग्निमादधे ॥ ४८ ॥ (५ । १० । ११) ।

+ ऋतं सत्यस्वरूपं संभारं स्तृणामि प्रथयामि । पृथिव्यां वराहविहतादिमृदि विद्यमानं पुरीषं मलभूतभागम् । ऋतेऽध्याग्निमग्नौ तथा सत्येऽध्यग्निमादधे स्थापयामि । संभारान्तर्गतमशुचिपदार्थं वह्नौ विनाश्य सत्यं शुद्धपदार्थं प्रथयामीत्यर्थः ।

संयावः प्रियास्तनुवः संप्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः । संप्रियास्तनुवो मम ॥ ४९ ॥ ( तै० ब्रा० १ । २ । १ ) ।

सा० भा०—हे वानस्पत्यसंभारा वो युष्माकं याः प्रियास्तनुवस्ताः संसृ-

---

[1] मधुमदिति सत्याषाढीयः पाठः ।

ज्यन्तामेकास्मिन्नेव कार्ये प्रवर्तन्ताम्। तथा वो युष्माकं प्रियाणि हृदयानि च संसृज्यन्ताम्। तथा वो युष्माकं प्रिय आत्मा जीवश्च संसृज्यताम्। तथा मम प्रियास्तनुवोऽपि संसृज्यन्ताम्। एकस्मिन्कार्ये प्रवर्तन्ताम्। ऋत्विग्भिः सह शरीरबहुत्वम्।

**सं वः सृजामि हृदयानि सꣳसृष्टं मनो अस्तु वः।**
**सꣳसृष्टं प्राणो अस्तु वः॥ ५० ॥ ( १ । २ । १ )।**

सा० भा०—हे वानस्पत्यसंभाराः, वो युष्माकं मनो वचश्च संसृष्टमस्तु। हृदयवाक्येन परस्परस्नेहोऽपि विवक्षितः। मनोवाक्येन कार्येष्वैकमत्यम्। तथा वो युष्माकं प्राणश्च संसृष्टोऽस्तु। अनेनैकविधा प्रवृत्तिर्विवक्षिता।

प्रायो ब्राह्मणगतामन्त्रा आपस्तम्बेन पुनः सूत्रे पठ्यन्ते। संहितागतास्तु न पठ्यन्ते। संहितायां ब्राह्मणे च विद्यमानोऽपि पुनर्न पठ्यते। यथा संयावः प्रिया इति मन्त्र उभयत्र संहितायां ब्राह्मणे च पठितस्तथाऽपि सूत्रकारेण प्रतीकमात्रं गृहीत्वा संहितास्थोऽयमिति ध्वनितम्। ब्राह्मणक्रमोऽप्यन्यथाकृत इत्यत्र स्वतन्त्र ऋषिरेव प्रमाणम्।

**इतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधिजातवेदाः।**
**सगायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्॥५१॥**
**(तै० ब्रा० १।४।४)।**

सा० भा०—जातवेदा उत्पन्नसर्वजगदभिज्ञोऽग्निः स्वाद्योनेः स्वकीयात्कारणादितोऽरणेः प्रथममुत्पन्नः। स च गायत्र्यादिच्छन्दस्त्रयेण सहकारिणा देवान्हविश्च प्रकर्षेण जानन्नस्मदीयं हव्यं देवेभ्यो वहतु।

**यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्षे दिवि याः पृथिव्याम्।**
**ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने॥५२॥**
**(आ० श्रौ० ५। १०। १३)।**

+ हे जातवेदः। हे अग्ने यास्ते तवान्तरिक्षे दिवि पृथिव्यां च तव शिवाः कल्याणकारिण्यस्तनुवस्तन्वः शरीराणीत्यर्थः। ताभिस्तनूभिः संभूयैकीभूय सगणः ससमूहः सजोषाः सुप्रीतो भूत्वा हिरण्ययोनिर्हिरण्यस्य योनिर्निदानं त्वं हव्यं हविर्द्रव्यं वहेन्द्रवरुणादिदेवताः प्रापयेत्यर्थः।

**चन्द्रमाग्निं चन्द्ररथं हरित्वचं वैश्वानरमप्सुषदꣳ सुवर्विदम्।**
**विगाहं तूर्णि तविषीभिरावृतं भूर्णि देवास इह सुश्रियं दधुः॥५३॥**
**(आ० सू० ५। १०। १४)।**

+ देवासो देवाः। इह सुवर्णे चन्द्रमाह्लादकं चन्द्ररथमाह्लादकरथयुक्तं हरित्वचं मनोहारि शरीरं वैश्वानरं विश्वेषां नराणां हितकृतमप्सुषदं कार्यभूतजले

निरालम्बं सुखावहं स्वर्वेत्तारं विगाहं दुष्प्रवेश्यं तूर्ष्णिं त्वराशीलं तविषीभिः सर्वप्रकारकबलैरावृतं युक्तं भूर्णिं पोषकं सुश्रियं शोभनमग्निं दधुर्धारयामासुः ।

**चित्तिः स्रुक्चित्तमाज्यं वाग्वेदिः आधीतं बर्हिः केतो अग्निः विज्ञातमग्निः वाक्पतिर्होता मन उपवक्ता प्राणो हविः सामाध्वर्युः ॥ ५४ ॥**

**( तै० आ० ३ । १ ) ।**

सा० भा०—आदौ सिसृक्षुः प्रजापतिः सृष्ट्यर्थं केन विधानेन आध्यात्मिकेनेष्टवान्, तद्यागवर्तिनः स्रुगादय एतेषु मन्त्रेषु प्रतिपाद्यन्ते । अत्र चित्तिचित्तशब्दाभ्यां निर्विकल्पकसविकल्पकभेदजनकावन्तःकरणवृत्तिभेदौ विवक्षितौ । वाक्प्रसिद्धा । आधीतमुच्चार्यमाणम् । केतविज्ञातशब्दाभ्यां निर्विकल्पकसविकल्पकज्ञानविषयावभिधीयेते । वाक्पतिशब्देन वाचः प्रवर्तकः कण्ठताल्वादिस्थानेषु संयुज्यमानो वायुरुच्यते । मनःप्राणौ प्रसिद्धौ । सामशब्देन तद्धेतुर्वर्णोच्चारणशक्तिरुच्यते । एवं चित्त्यादयो दश शरीरगताः पदार्थविशेषाः । स्रुगादयो दश पदार्था होमनिष्पादकाः । अग्निशब्दद्वयेन आहवनीयगार्हपत्यौ विवक्षितौ । उपवक्तृशब्देनानुवचनकर्तुर्होमः । प्रैषवक्ता मैत्रावरुणो विवक्षितः । यद्वा प्रोक्षणादिष्वनुज्ञायां पृष्टायां ब्रह्मा समीपे स्थितः ॐ प्रोक्षेत्यादिना तदनुज्ञां वक्ति । तस्मादयमुपवक्ता । चित्त्यादयः शरीरगतपदार्थाः स्रुगादिरूप इति वाक्यार्थः । अस्मिन्मन्त्रे स्रुगादीनां होमसाधनानां दशानामभिहितत्वाद्दश होतेत्युच्यते ।

**सहाग्नेऽग्निना जायस्व सह रय्या सह पुष्ट्या सह प्रजया सह पशुभिर्ब्रह्मवर्चसेन ॥ ५५ ॥ ( आ० श्रौ० ५ । १० । ९ ) ।**

+हे अग्ने ! अग्निना मथ्यमानवह्निना सह रय्या धनेन सह पुष्ट्या पोषणेन सह प्रजया संतत्या सह पशुभिर्ब्रह्मवर्चसेन ब्राह्मेण तेजसा सह जायस्वोत्पत्तिं लभस्व । रयिपुष्टिप्रजापशुब्रह्मवर्चसानि मह्यं देहीत्यर्थः ।

**उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् ।**
**आयुः प्रजाꣳ रयिमस्मासु धेह्यजस्रो दीदिहि नो दुरोणे॥५६॥**

**(तै० ब्रा० २ । ५ । ८ ) ।**

सा० भा०—हे जातवेदः पुनरपि त्वमुपावरोहारण्योः सकाशाद्भूमाववतर । अवतीर्य च प्रजानन्नस्य देवस्येदं हविरिति प्रकर्षेण जानन्नोऽस्मदीयं हव्यं देवेभ्यो वह प्रापय । आयुरादिकमस्मासु संपादय । अजस्रो निरन्तरं वर्तमानस्त्वं नो दुरोणेऽस्मदीये गृहे दीदिहि दीप्यस्व ।

**पृथिवी होता द्यौरध्वर्युः, रुद्रोऽग्नीत् , बृहस्पतिरुपवक्ता ॥५७॥**

**( तै० आ० ३ । २ ) ।**

सा० भा०—तत्र पृथिव्यादयः प्रसिद्धाः । तथा होत्रादयश्च । उपवक्तृशब्देन समीपे स्थित्वा तत्कर्मस्वनुजानानो ब्रह्मा विवक्षितः ।

**अग्निर्होता अश्विनाऽध्वर्यू त्वष्टाऽग्नीद् मित्र उपवक्ता ॥ ५८॥**

**( तै० आ० ३ । ४ ) ।**

सा० भा०—अग्न्यादयः प्रसिद्धाः। अध्वर्युः प्रतिप्रस्थाता चेत्येवमध्वर्युद्वित्वेन होतृपञ्चकं पूरणीयम् । अस्य मन्त्रस्य पञ्चहोतृमन्त्र इति याज्ञिकसमाख्या । तस्मात्कथं पञ्चत्वमिति चेदध्वर्युद्वित्वेनेति गृहाण, इति भाष्यकारः ।

**सूर्यं ते चक्षुः वातं प्राणः द्यां पृष्ठम्, अन्तरिक्षमात्मा अङ्गैर्यज्ञं पृथिवीꣳ शरीरैः ॥ ५९ ॥ ( तै० आ० ३ । ४ ) ।**

सा० भा०—अस्य विनियोगः पशुबन्धावुक्तस्तदनुसारेण विद्यारण्यैर्भाषितोऽयं मन्त्रः । हे पशो योऽयं सूर्यः स ते चक्षुः । यो वायुः स ते प्राणः । या द्यौः स पृष्ठभागः । उपरिवर्तित्वसामर्थ्यात् । यदिदमन्तरिक्षं तत्त्वदीयो जीवात्मा । मध्यवर्तित्वसामर्थ्यात् । यानि हृदयादीनि अङ्गानि तैर्यज्ञं संपादयतीति शेषः । यानि अन्यानि अस्थ्यादीनि शरीरगतानि तैः पृथिवीं प्राप्नुहीति शेषः। यजमानपक्षेऽप्ययं योजयितुं शक्यः। पशुस्थाने यजमान इति संबोधनीयम् । प्रकृते यजमानपरत्व एव योजनीयः । कुत इति चेत् । आधाने—“ अथ चतुर्होतृन्यजमानं वाचयति ” इत्यापस्तम्बेन तत्र विनियुक्तत्वात् । चित्तिः स्रुगित्यादिपञ्चानुवाकाश्चतुर्होतार इति याज्ञिकसमाख्या । विद्यारण्यास्तूभयथा बभाषिरे ।

**महाहविर्होता । सत्यहविरध्वर्युः । अच्युतपाजा अग्नीत् । अच्युतमना उपवक्ता । अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ । अयास्य उद्गाता ॥ ६० ॥**

सा० भा०—महाहविः सत्यहविः अच्युतपाजाः अच्युतमना अनाधृष्यः अप्रतिधृष्यः अयास्य एते सप्तर्षयो महर्षयः । तन्महर्षिस्वरूपा अत्रत्या होत्रादयः यज्ञस्य सोमयागस्य अभिगरौ अभित उद्गातुः पुरस्तात्पश्चाच्च गृहीतप्रस्तारप्रतिहारभागौ । गायेत इति प्रस्तोतृप्रतिहर्तारावभिगरौ । होताऽध्वर्युराग्नीध्रो ब्रह्मा प्रस्तोता प्रतिहर्तोद्गातेति सप्तसंख्याका होमनिष्पादका प्रोक्ताः । अयं मन्त्रः सप्तहोतेत्युच्यते ।

**अजस्रग्निः पूर्वः पूर्वेभ्यः पवमानः शुचिः पावक ईड्यः ॥६१॥ ( आप० श्रौ० ५ । ११ । १२ ) ।**

+ पूर्वेभ्यः पूर्वश्चिरंतनः पवमानः स्वयंशुद्धः शुचिर्दीप्यमानः पावकोऽन्यस्य शोधक ईड्यस्तुत्योऽग्निरजस्रं प्रादुरभूत् ।

**प्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः पोषेण मह्यम् । दीर्घायुत्वाय शतशारदाय शतꣳ शरद्भ्यः । आयुषे वर्चसे जीवात्वै पुण्याय ॥ ६२ ॥ ( तै० ब्रा० १ । २ । १ ) ।**

सा० भा०—हे अग्ने प्रजापतेः प्राणेन प्राणवायुना त्वामभिलक्ष्य प्राणिमि श्वासं करोमि । तथा पूष्णो देवस्य पोषेण सामर्थ्येन वाऽभिप्राणिमि । किम-

र्थम् । मह्यम् । मम शतशारदाय दीर्घायुत्वाय शतसंवत्सरपरिमितं यद्दीर्घायुस्तत्सिद्धये । किंच शतं शरद्भ्यः शतसंख्याकेभ्यः संवत्सरेभ्य ऊर्ध्वमप्यायुःसिद्धये । वर्चसे बलाय । जीवात्वै जीवनौषधाय । पुण्याय सुकृतसिद्धये च ।

**अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीडुजम्भम् । दश स्वसारो अग्रुवः समीचीः पुमाꣳसं जातमभिसꣳरभन्ताम् ॥६३॥ (१।२।१)।**

सा० भा०—मर्त्यासो मनुष्यऋत्विजोऽमृतं मरणरहितमग्निं देवमजीजनन्, उत्पादितवन्तः। कीदृशमग्निम् । अस्रेमाणमगम्यमशोषणीयं वा । स्रिवु गतिशोषणयोरिति धातुः । तरणिं दुःखेभ्यस्तारकम् । वीडुजम्भं दृढदन्तमूलमग्रुवोऽङ्गुलयस्ताश्च शरीरेण सहोत्पन्नत्वात्स्वसारो भगिनीसमानाः । दशसंख्याकास्ता अङ्गुलयः समीचीरनुकूला भूत्वा जातमभिरूपं पुमांसमभिसंरभन्तामभितः संगृह्णन्तु।

**सम्राडसि विराडसि सारस्वतौ त्वोत्सौ समिन्धातामन्नादं त्वान्नपत्याय ॥ ६४ ॥ (आ० श्रौ० ५।११।६)।**

+ हे अग्ने, त्वं सम्राट् राजराजो विराट् विशेषेण शोभमानोऽसि । सारस्वतौ जलवन्तावुत्सौ मेघावन्नादमन्ने भक्षकं त्वा त्वामन्नपत्यायान्नाधिपत्याय समिन्धातां प्रदीपयताम् । अबिन्धनं तेज इति तु प्रसिद्धम् ।

**भृगूणां त्वा देवानां व्रतपते व्रतेनाऽऽदधामि ॥ ६५ ॥ (आप० श्रौ० ५।११।७)।**

सा०भा०—हे व्रतपते कर्मस्वामिन्, ये मनुष्या भृगुगोत्रोत्पन्नास्तेषां संबन्धिना व्रतेन कर्मविशेषेण निमित्तभूतेन त्वामादधामि, इहाऽऽयतने स्थापयामि । देवानामिति सूत्रे विशेषः । तस्यार्थस्तु देवानां भृगूणां च व्रतपते इति ।

**अङ्गिरसां त्वा देवानां व्रतपते व्रतेनाऽऽदधामि ॥ ६६ ॥ आप० श्रौ० ५।११।७)।**

सर्वं पूर्ववत् । अङ्गिरोगोत्रोत्पन्नानामिति विशेषः ।

**आदित्यानां त्वा देवानां व्रतपते व्रतेनाऽऽदधामि ॥ ६७ ॥ (आप० श्रौ० ५।११।७)।**

अन्येषामन्यगोत्रोत्पन्नानां ब्राह्मणानामादित्यानां त्वा इति विशेषः । तेषामादित्या एव देवताः । एतेषां मन्त्राणामयमर्थोऽग्रेऽप्यनुसंधातव्यः ।

**भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा । उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायादधे ॥६८॥ (तै० सं० १।५।३)।**

सा० भा०—हे गार्हपत्यप्रदेश त्वं लोकत्रयात्मकोऽसि । तत्र भूम्ना बाहुल्येन भूमिरसि । वरिणा वरिम्णा श्रेष्ठत्वेन द्यौरसि । महित्वा महत्त्वेनान्तरिक्षमसि । हेऽदिते भूमे तत्प्रदेशरूपे देवि तवोत्सङ्गेऽन्नभोक्तारं गार्हपत्याग्निं यजमानस्यान्नयोग्यान्नसिद्ध्यर्थमादधे ।

**आयं गौः पृश्निरक्रमीदसनन्मातरं पुनः । पितरं च प्रयन्त्सुवः ॥ ६९ ॥ ( तै० सं० १ । ५ । ३ ) ।**

सा० भा०—अयं गार्हपत्य आदित्यरूपेण गौर्गमनशीलः पृश्निः श्वेतवर्णो जगदाक्रमीत् । आक्रमणप्रकार एव स्पष्टी क्रियते । पुनर्मातरं पृथिवीमसनत्—आसीदत् । प्राप्नोदित्यर्थः । सुवः स्वर्गरूपं पितरं च प्रयन्प्रकर्षेण गच्छन्नवस्थितः । द्यौः पिता पृथिवी मातेति श्रुत्यन्तरात्तयोर्मातापितृत्वम् ।

**घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भुवत् ।**
**छर्दिस्तोकाय तनयाय यच्छ ॥७०॥ ( तै० ब्रा० १ । १ । ७ ) ।**

सा० भा०—घर्मो दीप्तिर्ज्वाला । स च घर्मोऽग्निशरीरस्य शिरःस्थानीयः । तच्च शिरः, अयं पुरोवर्ती गार्हपत्योऽग्निः । तादृश हे गार्हपत्याग्ने त्वमस्मदीयैः पशुभिः सह संप्रियो भुवत्सम्यक्प्रीतियुक्तो भव । ततोऽस्मदपत्याय च छर्दिर्यच्छ तेजो देहि ।

**यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः ।**
**ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने ॥७१॥**
**(आप० श्रौ०)**

+हे जातवेदः हे अग्ने । यास्ते तवान्तरिक्ष उताथवा पार्थिवीः पार्थिव्यः पृथिव्यां विद्यमानाः शिवाः कल्याण्यस्तनवः शरीराणि ताभिस्तनूभिः संभूयैकीभूय सगणः ससमूहः सजोषाः सुप्रीतो भूत्वा हिरण्ययोनिर्हिरण्यस्य योनिर्निदानं त्वं हव्यं हविर्द्रव्यं वहेन्द्रवाय्वादिसमीपं प्रापय ।

**प्राणे त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै ॥७२॥**
**(तै० ब्रा० १ । २ । १) ।**

सा० भा०—हे गार्हपत्य प्राणेऽस्मदीये निमित्तभूते सति तद्रक्षार्थममृतं त्वामादधामि । ममान्नाद्यसिद्ध्येऽन्नादं मम गुप्त्यै रक्षणसिद्ध्ये गोप्तारं त्वामादधामि ।

**दिवस्त्वा वीर्येण पृथिव्यै महिम्नाऽन्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे ॥ ७३ ॥ (आप० श्रौ० ५ । १२ । २ । तै० ब्रा० १ । २ । १ ) ।**

सा० भा०—हे गार्हपत्य द्युलोकस्य यद्वीर्यं पृथिव्याश्च यो महिमा अन्तरिक्षस्य यत्पोषं सामर्थ्यं पशूनां यत्तेजस्तैः सर्वैरपि पशुप्रदानसामर्थ्यं त्वामिह आयतन आदधे । अत्र मन्त्रद्वये ब्राह्मणे सूत्रे च पाठभेदः—प्रथममन्त्रे—प्राण इति सप्तमीविभक्तिर्ब्राह्मणे। सूत्रे प्राणमिति द्वितीया। द्वितीये मन्त्रे—'पशूनां तेजसा' इति पदद्वयं ब्राह्मणे नास्त्येकसूत्रे त्वस्ति। विनियोगस्तूभयोरपि भाष्यकारेणाऽऽपस्तम्बसूत्रोक्त एवाङ्गीकृतः ।

प्रथमद्वितीयमन्त्रौ बौधायनो यथाब्राह्मणं सूत्रयांबभूव । प्रथममन्त्रे भगवत आपस्तम्बस्य सूत्रणं अमृत इति सप्तमी । ब्राह्मणे द्वितीया । तदनुसारमर्थोऽनुसंधेयः । वस्तुतस्तु ब्राह्मणेन आहवनीयाधाने विनियुक्तो मन्त्रः । विभक्तिपरिणामेनात्र विनियुक्तः । उभयत्रापि विभक्तिपरिणामः समानः । अत एव वयं न किंचिद्विशेषमाचक्ष्महे । तत्र तु प्राणमित्यस्य स्थाने अपान इति प्रकृत्यूह आपस्तम्बेन सूत्रित इत्यन्यदेतत् ।

अग्ने गृहपतेऽहे बुध्न्यपरिषद्य दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय । पृथिव्यास्त्वा मूर्धन्सादयामि यज्ञिये लोके । यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाऽभिनिदधामि ॥ ७४ ॥ (आप० श्रौ० ५ । २ । २)।

+ हे अग्ने गृहपते गार्हपत्य अहे अयनादहिर्गमनशील इत्यर्थः । तत्संबुद्धिः । बुध्न्य अन्तरिक्षनिवासिन् । बुध्नमन्तरिक्षमिति निरुक्तम् । परिषद्य परिषदे हितः परिषद्यः । परितः सीदन्ति कर्मानुष्ठित्यै य ऋत्विगादयस्तेभ्यो दृष्टादृष्टफलप्रदत्वेन हितस्तत्संबुद्धिः । दिवः पृथिव्या अन्तरिक्षात्परि परस्तात्स्वर्गलोकं यजमानाय यजमानमित्यर्थः । विन्द प्रापय । अहमध्वर्युस्त्वां पृथिव्या मूर्धन् मूर्धनि यज्ञिये लोके सादयामि निदधामि । हे अग्ने । यो निष्ट्यः समीपस्थः। निसस्त्यप् । योऽनिष्ट्यो दूरस्थः शत्रुर्माभिदासति पीडयति । इदमिमं तमहं त्वया त्वत्साहाय्येनेत्यर्थः । अभिनिदधामि विनाशयामि ।

सुगार्हपत्यो विदहन्नरातीरुषसः श्रेयसीर्दधत् । अग्ने सपत्नाꣳ अपबाधमानो रायस्पोषमिषमूर्जमस्मासु धेहि ॥ ७५ ॥ (तै० ब्रा० १ । २ । १)।

सा० भा०—शोभनो गार्हपत्योऽयमग्निररातीर्द्वेषिणो विशेषेण दहन्नुषसो दिवसाञ्श्रेयसीः श्रेयसीर्दधदुत्तरोत्तरश्रेष्ठान्कुर्वन्वर्तते । हेऽग्ने गार्हपत्य सपत्नानस्मदीयाञ्शत्रूनपबाधमानः पीडयन्धनपुष्टिमन्नरसं चास्मासु संपादय ।

वातः प्राणस्तदयमग्निः संप्रियः पशुभिर्भुवत् । स्वदितं तोकाय तनयाय पितुं पच ॥ ७६ ॥

सा० भा०—योऽमयग्निसखो वायुः सोऽग्नेः प्राणस्तत्प्राणरूपमयमाधीयमानो गार्हपत्याग्निः । हे गार्हपत्याग्ने त्वमस्मदीयैः पशुभिः सह संप्रियो भव । अस्मत्पुत्राय तत्पुत्राय च स्वदितं स्वादुयुक्तं पितुमन्नं पच पक्वं कुरु । इति दक्षिणाधानेऽयं मन्त्रो विनियुक्तः । परं गार्हपत्याधानोत्तरं यजमानेन वाचनीयोऽयं मन्त्र इति गार्हपत्यपदं प्रयुक्तमस्माभिरत्र । पितुं पचेत्यत्रापि यज्ञपर्जन्यनिदानमिति पुत्रादिसंतत्यै अन्नमुत्पादय पार्थिवेन धातुना सह योजयेत्यर्थः । विनियोगानुसारमर्थोऽर्थयितव्य इति मीमांसकाः । स च प्रतिविनियोगं भिद्यत एव । कदाचन

स्तरीरासि, ऐन्द्रया गार्हपत्यमुपतिष्ठते, इत्यत्र बलाबलाधिकरणे मीमांसितोऽयं सम्पपाञ्चितो विषयः ।

अर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः संप्रियः पशुभिर्भुवत् ।
यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः शुक्रं ज्योतिरजस्रम् ॥ ७७ ॥
तेन मे दीदिहि तेन त्वा दधेऽग्निनाऽग्ने ब्रह्मणा ( तै० ब्रा० । १ । १ । ७ ) ।

सा० भा०—अर्कोऽर्च्यमानो मण्डलाल्या(त्मा)वह्निशरीरस्य चक्षुःस्थानीयस्तच्च-क्षुःस्वरूपमसौ दिवि दृश्यमानः सूर्यरूपः स सूर्योऽयमाधीयमान आहवनीयोऽग्निः। हे आहवनीयास्मदीयैः पशुभिः संप्रियो भव । हे शुक्र दीप्यमानाहवनीय ते त्वदीयं यच्छुक्रं वर्चो बहिःप्रसृतं दीप्तिरूपं तेजो या च शुक्रा तनूर्ज्वालारूपं शरीरं यदप्यजस्रं शुक्रं ज्योतिः सर्वदा वर्तमानो भारूपशरीरगतप्रकाशस्तेन सर्वेण मे दीदिहि मां प्रकाशय । हेऽग्ने ब्रह्मणा परिवृढेन अर्कश्चक्षुरिति मन्त्रेण । तेन पूर्वोक्तगुणयुक्तेनाग्निनाऽऽहवनीयरूपेण त्वामिहाऽऽदधे ।

या ते अग्ने पशुषु पवमाना प्रिया तनूर्या पृथिव्यां याऽग्नौ ।
या रथंतरे या गायत्रे छन्दसि तां त एतेनावयजे स्वाहा ॥७८॥
( आप० श्रौ० ५ । १६ । ४ ) ।

+ हे अग्ने पशुषु पवमाना स्वयंशुद्धा या तव प्रिया तनूः शरीरं या पृथिव्यां या अग्नौ मथ्यमाने या रथंतरे साम्नि गायत्रे छन्दसि च तनूरस्ति ते तव तां तनूमेतेन हव्येनावयजे यजे स्वाहा ।

या ते अग्नेऽप्सु पावका प्रिया तनूर्याऽन्तरिक्षे या वायौ या वाम-देव्ये या त्रैष्टुभे छन्दसि तां त एतेनावयजे स्वाहा ॥ ७९ ॥
( ५ । १६ । ४ ) ।

+ अप्सु जलेषु । पावका शोधिका । अन्तरिक्षे वायौ वामदेव्ये सामनि त्रैष्टुभे छन्दासि । अन्यत्पूर्ववत् ।

या ते अग्ने सूर्ये शुचिः प्रिया तनूर्या दिवि याऽऽदित्ये या बृहति या जागते छन्दसि तां त एतेनावयजे स्वाहा ॥ ८० ॥
( ५ । १६ । ४ ) ।

+सूर्ये सवितरि शुचिर्दीप्यमाना दिवि बृहति साम्नि जागते छन्दसि । अन्यत्पूर्ववत् ।

ओजसे बलाय त्वोद्यच्छे वृषणे शुष्मायाऽऽयुषे वर्चसे ।
सपत्नतूरसि वृत्रतूः ॥ ८१ ॥ ( तै. ब्रा. १ । २ । १ ) ।

सा० भा०—हेऽग्ने त्वमोजःप्रभृतिसिद्ध्यर्थमुद्यच्छे । ओजो बलहेतुरष्टमो धातुः । बलं शरीरसामर्थ्यम् । वृषन्शब्दः सेचनसामर्थ्यवाची । शुष्मशब्दोऽत्र

सहकारिसंपादितां शक्तिमाचष्टे । आयुः प्रसिद्धम् । वर्चः कान्तिः । हेऽग्ने त्वं सपत्नतूरसि वैरिहिंसकोऽसि । तथा वृत्रतूः, धर्मबुद्धेरावरकाणां पापानां हिंसकोऽसि ।

यस्ते देवेषु महिमा सुवर्गो यस्त आत्मा पशुषु प्रविष्टः ।
पुष्टिर्या ते मनुष्येषु पप्रथे तया नो अग्ने जुषमाण एहि
॥ ८२ ॥ ( १ । २ । १ ) ।

सा० भा०—हेऽग्ने देवेषु मध्ये कर्मफलभूतः स्वर्गरूपो यस्ते महिमा पशुषु क्षीरादिहविःस्वरूपेण प्रविष्टो यस्तवाऽऽत्माऽत्यन्तप्रियः पदार्थो मनुष्येषूदराग्निजनिता या त्वदीया पुष्टिः पप्रथे प्रसिद्धा वर्तते । तया पुष्ट्या तदुपलक्षितस्वर्गक्षीराभ्यां च नोऽस्माञ्जुषमाण एहि ।

दिवः पृथिव्याः पर्यन्तरिक्षाद्वातात्पशुभ्यो अध्योषधीभ्यः ।
यत्र यत्र जातवेदः संबभूथ ततो नो अग्ने जुषमाण एहि
॥ ८३ ॥ ( १ । २ । १ ) ।

सा० भा०—दिवः पृथिव्या अन्तरिक्षाद्वोपरिवातात्पशुभ्य ओषधीभ्यश्चोपरि तथा यत्र यत्र देशविशेषे हे जातवेदः संबभूथोत्पन्नोऽसि । हे अग्ने ततः सर्वस्मात्स्थानान्नोऽस्माञ्जुषमाण एहि ।

उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः स नो भव शिवतमः ।
सुप्रतीको विभावसुः ॥ ८४ ॥

सा० भा०—हेऽग्ने विश्वे सर्वेऽपि देवाः प्राणरूपाश्चित्तिभिरुद्यमनकुशलाभिरिन्द्रियवृत्तिभिरुदु ऊर्ध्वमेव त्वां भरन्तु धारयन्तु । स त्वं नोऽस्माकं शिवतमः शान्ततमः सुप्रतीकः सुमुखो विभावसुः प्रभविता वासयिता च भव । अस्य मन्त्रस्य प्रथमपादे विश्वदेवशब्दार्थं दर्शयति—उदु त्वा विश्वे देवा इत्याह । प्राणा वै विश्वे देवाः । प्राणैरेवैनमुद्यच्छते । अग्ने भरन्तु चित्तिभिरित्याह । यस्मा एवैनं चित्तायोद्यच्छते । तेनैवैनꣳ समर्धयति । दीव्यन्ति स्वस्वकार्येषु व्यवहरन्ति, इति प्राणाः । चित्तिशब्देन चित्तिमात्रगतेन चित्तमभिप्रेतकार्यं सूच्यते । तथा सति यस्मै कार्यायेदमुद्यमनं तेनैव कार्येणैनमग्निं समृद्धं करोति ।

या वाजिन्नग्नेः पशुषु पवमाना प्रिया तनूस्तामावह ।
या वाजिन्नग्नेरप्सु पावका प्रिया स्तनूस्तामावह ।
या वाजिन्नग्नेः सूर्ये शुचिः प्रिया तनूस्तामावह ॥ ८५ ॥
( आ० श्रौ० ५ । १३ । ७ ) ।

+ वाजिन् अन्नदातः । अग्ने । अन्यत्स्पष्टम् ।

**त्रिंशद्धाम विराजति वाक्पतङ्गाय शिश्रिये ।**
**प्रत्यस्य वह द्युभिः ॥८६॥ ( तै० ब्रा० १ । ५ । ३ ) ।**

सा०भा०—आदित्यरूपस्य गार्हपत्यस्य संबन्धि त्रिंशत्संख्याकं धाम मुहूर्तरूपं तेजो विशेषेण राजते । अह्नः पञ्चदश मुहूर्ताः । रात्रेः पञ्चदश । किंच वैदिकस्तुतिरूपा वाक्पतङ्गाय पक्षिवदाकाशसंचारिणमादित्यं शिश्रिय आश्रितवतीत्यर्थः । हे तादृग्गार्हपत्य त्वां प्रति यदस्माभिरुद्वासनरूपं प्रतिकूलमाचरितं तत्सर्वमस्य प्रतिक्षिप मनसि मा कृथाः । द्युभिर्ज्वालारूपाभिर्वहास्मदीयं हविर्देवेषु प्रापय । व्यानं त्वा इत्यस्य भाष्यं प्राणं त्वा इत्यत्रत्यमनुसंधेयम् । केवलं प्राणमित्यस्य स्थाने व्यानमिति पदं प्रयोक्तव्यम् । व्यानः सर्वशरीरगः । प्राण एव व्यानसंज्ञां प्राप । स्थानभेदात् । अग्नेऽन्नपा मयोभुवः सुशेवः, अयमपि पूर्वेण अग्ने गृहपते इत्यनेन व्याख्येयः । अन्नपते अग्ने मयोभुवः सुखनिधानम् । मय इति सुखनाम । सुशेवः सुसेवितुं योग्यः । अयं भेदः । शेषं समानम् ।

**प्राचीनमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्निर्भवेह ।**
**विश्वा आशा दीद्यानो विभात्यूर्जं नो धेहि द्विपदे चतुष्पदे ॥८७॥**
**( तै० ब्रा० १ । २ । १ ) ।**

**विक्रमस्व महाँ असि वेदिषन्मानुषेभ्यः ।**
**त्रिषु लोकेषु जागृहि प्रजया च धनेन च ॥(आप.श्रौ.५।१४।५)।**
**इमा उ मामुपतिष्ठन्तु राय आभिः प्रजाभिरिह संवसेय ।**
**इहो इडा तिष्ठतु विश्वरूपी मध्ये वसोर्दीदिहि जातवेदः ॥**

सा०भा०—हेऽग्ने प्राचीं पूर्वां प्रदिशं प्रकृष्टां दिशमनुलक्ष्य विद्वान्मार्गाभिज्ञः प्रेहि प्रकर्षेण गच्छ । अग्नेर्गार्हपत्यस्येह पुरोऽग्निर्भवास्मिन्देवयजने पूर्वदिग्वर्ती बहुनिर्भव । दीद्यानः स्वयं प्रकाशमानः । विश्वा आशा विभाहि सर्वा दिशः प्रकाशय । नोऽस्मदीयाय द्विपदे मनुष्याय चतुष्पदे पशवे चोर्जं रसं धेहि संपादय ।

हेऽग्ने विक्रमस्व, अनिष्टनिवारणे पराक्रमं कुरु । त्वं महानस्यधिकशक्तियुक्तोऽसि । मानुषेभ्यो मनुष्याणामर्थे वेदिषन्वेद्यामुपविष्टः संस्त्रिषु लोकेषु जागृहि यजमानं नेतुं सावधानो भव । प्रजया धनेन च यजमानः संपन्नो यथा स्यात्तथा जागृहि सावधानो भव । अस्मिन्मन्त्रे "प्रजया च धनेन च" इति ब्राह्मणपठितमन्त्रादाधिकं सूत्रयांचकार आपस्तम्बः । इमा उ रायो लोके दृश्यमानानि सर्वाण्यपि धनानि मामुपतिष्ठन्तु प्राप्नुवन्तु । आभिः पुत्रपौत्रादिभिः प्रजाभिः सह, इहास्मिञ्जन्मनि संवसेय सम्यक्तिष्ठामि । किंचेह, इहैव जन्मनि विश्वरूपी महिष्यजाद्यनेकरूपगुणरूपयुक्तेडा गौस्तिष्ठतु । हे जातवेदस्त्वमस्मदीयस्य वसोर्मध्ये स्वामित्वेन स्थित्वा दीदिहि दीप्यस्व । वसुर्नाम गृहम् ।

**नाकोऽसि ब्रध्नः प्रतिष्ठासंक्रमणः ॥८८॥ ( आ० श्रौ० सू० ) ।**

+ हे अश्व ? त्वं नाकः स्वर्गः स्वर्गप्रद इत्यर्थः । ब्रध्नो महान् प्रतिष्ठासंक्रमणः । अभिमतिष्ठानिमित्तं संक्रमणं यस्येत्यर्थः । एतादृशोऽसि ।

**अभ्यस्थाद्विश्वाः पृतना अरातीस्तदग्निराह तदु सोम आह ।**
**बृहस्पतिः सविता तन्म आह पूषा माऽधात्सुकृतस्य लोके ॥८९॥**
**( तै० सं० ४ । २ । ८ ) ।**

सा० भा०—अयमश्वो विश्वाः सर्वाः पृतनाः प्रतिपक्षसेना अरातीर्दातव्यस्यादातृरूपा अभ्यस्थात्पादेनातिक्रम्य तिष्ठतु । तदभिक्रमणमाग्निराह—अनुमोदताम् । सोमोऽपि तदाह—अनुमोदताम् । बृहस्पतिर्मे मदर्थं तदाह तदनुमन्यताम् । तथा सविताऽपि तदनुमन्यताम् । पूषा सुकृतस्य लोके फलभूते स्वर्गे मा मामधात्स्थापयतु ।

**यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् ।**
**श्येनस्य पक्षा हरिणस्य बाहू उपस्तुतं जनिम तत्ते अर्वन्**
**॥ ९० ॥ ( तै० सं० ४ । २ । ८ )।**

सा० भा०—हे अर्वन् ! यद्यस्मात्कारणाज्जायमान उत्पद्यमान एव प्रथममादावाक्रन्दः क्रन्दितवानसि, अहो अग्न्यादीनामहं साधनमिति सर्वैरपि स्तुतमासीत् । जायमानत्वमेव विशदी क्रियते—समुद्रादुद्यन्समुद्रोपलक्षितादुदकात्त्वमुत्पद्यमानः, उत वा पुरीषात्पुरुषात् । पुंस्त्वशक्तिसंपन्नान्महतोऽश्वादुत्पद्यमानः । जन्मन उपस्तुतत्वे दृष्टान्तोऽयमुच्यते—श्यनेस्य पक्षा हरिणस्य बाहू । उपस्तुशब्दोऽत्राध्याहर्तव्यः । यथा श्येनाख्यस्य पक्षिणः पक्षौ शीघ्रोत्पतनहेतुत्वात्सर्वैरुपस्तुतौ यथा वा हरिणस्य मृगस्य बाहू पादौ शीघ्रगमनहेतुत्वादुपस्तुतौ तद्वादित्यर्थः ।

**ये ते अग्ने शिवे तनुवौ विराट् च स्वराट् च**
**ते मा विशतां ते मा जिन्वताम् ।**
**ये ते अग्ने शिवे तनुवौ सम्राट् चाभिभूश्च**
**ते मा विशतां ते मा जिन्वताम् ।**
**ये ते अग्ने शिवे तनुवौ विभूश्च परिभूश्च**
**ते मा विशतां ते मा जिन्वताम् ।**
**ये ते अग्ने शिवे तनुवौ प्रभ्वी च प्रभूतिश्च**
**ते मा विशतां ते मा जिन्वताम् ।**
**यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वादधे ॥९१॥( तै० ब्रा० १ । १ । ७) ।**

सा० भा०—विराडादिभिः प्रभूतिपर्यन्तैरष्टाभिः शब्दैरुक्ता अग्ने शिवाः शान्तास्तनुवः । हेऽग्ने ते त्वदीये विराट् स्वराडाख्ये ये शान्ते तनू ते उभे मां प्रविश्य प्रीणयताम् । एवमुत्तरत्रापि । विविधं राजत इति विराट् । स्वयमेव राजत इति स्वराट् । सम्यग्राजत इति सम्राट् । वैरिणोऽभिभवतीत्य-

भिभूः । विशिष्टेन रूपेण भवतीति विभूः । परितो भवतीति परिभूः । आज्ञालक्षणेन प्रभुत्वेन युक्ता प्रभ्वी । प्रकृष्टेनैश्वर्येणोपेता प्रभूतिः । हे अग्ने या एतास्ते त्वदीयाः शिवास्तनुवस्ताभिर्युक्तं त्वामिहाऽऽदधे ।

**यास्ते अग्ने घोरास्तनुवस्ताभिः पाप्मानं गच्छ ॥९२॥ (१।१।७) ।**

सा० भा०—हेऽग्ने यास्ते घोरास्तनुवः क्षुत्तृष्णादिरूपास्ताभिर्घोराभिस्तनूभिः पाप्मानं गच्छ प्राप्नुहि । अत्र ब्राह्मणे—अमुं गच्छेति तत्रामुमिति स्थाने शत्रुं वा पाप्मानं वेति वक्तव्यम् । द्वेष्याय प्रहिणोतीति सूत्रात् । भाष्यकारः स्वयं शत्रुमित्याबभाषे । प्रयोगकारास्तु पाप्मानमिति पदं प्रयुञ्जिरे । अत्र यथेच्छं व्यवस्था । पाप्मानं वा शत्रुमितिवचने न दोषः । अमुमिति स्थाने यदि शत्रुविवक्षा तर्हि तन्नामनिर्देशो द्वितीयान्तः करणीयः । द्विषन्नाम निर्देष्टव्यमित्यारण्यकप्रमाणादवगच्छामः । 'योऽस्मान्द्वेष्टि यं च वयं द्विष्मः' इत्यारण्यके श्रुतत्वात् ।

**यास्ते अग्ने घोरास्तनुवः । क्षुच्च तृष्णा च । अस्नुक्चानाहुतिश्च । अशनया च पिपासा च । सेदिश्चामतिश्च । एतास्ते अग्ने घोरास्तनुवः । ताभिरमुं गच्छ । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः ॥ ९३ ॥**

**( तै० आ० । ४ । २२ ) ।**

सा० भा०—हेऽग्ने, ते तव संबन्धिन्यो घोरा अत्युग्रास्तनुवो याः सन्ति कास्ता इति चेत्क्षुदादिभिरमत्यन्तैरष्टकाभिः शब्दैः प्रतिपादिताः । हे अग्ने ते तव संबन्धिन्य एता उक्तास्तनुवस्ताभिस्तनुभिः सह योऽस्माकं द्वेष्टा यश्च द्वेष्योऽमुं द्विविधं पुरुषं गच्छ ।

**स्निक्च स्नीहितिश्च स्निहितिश्च । उष्णा च शीता च उग्रा च । भीमा च सदाम्नी सेदिरनिरा एतास्ते अग्ने घोरास्तनुवः ॥ ९४ ॥ ताभिरमुं गच्छ । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः ॥९४॥**

**( तै० आ० ४ । २२ ) ।**

सा० भा०—स्निगादीन्यनिरान्तानि तनुनामानि ।

| | | |
|---|---|---|
| अस्नुक् | अनाहुतिः | सेदिः । |
| अमतिः | स्निक् | स्नीहितिः । |
| स्निहितिः | सदाम्नी | अनिरा । |

अन्ये क्षुदादयः प्रसिद्धाः ।

**यदिदं दिवो यददः पृथिव्याः संविदाने रोदसी संबभूवतुः । तयोः पृष्ठे सीदतु जातवेदाः शंभूः प्रजाभ्यस्तनुवे स्योनः ॥९५॥**

**( तै० ब्रा० १ । २ । १ ) ।**

सा० भा०—यदिदमूषाख्यं दिवो यज्ञियं पृथिव्यां वर्तते यच्चादः कृष्णाख्यं पृथिव्यां यज्ञियं दिवि चन्द्रमसि वर्तते तेनोभयेन वयमेनं मन्यामहे । रोदसी द्यावापृथिव्यौ संविदान ऐकमत्यं गते संबभूवतुः । पूर्वमेकी बभूवतुरिति तयोस्तादृश्योर्द्यावापृथिव्योः पृष्ठ उपरि जातवेदाः सीदतु । कीदृशः । प्रजाभ्यः शंभूः प्रजानां सुखस्य भावयिता, तनुवे स्योनः स्वशरीराय च सुखकरः ।

अस्य प्राणादपानत्यन्तश्चरति रोचना ।
व्यख्यन्महिषः सुवः ॥ १६ ॥ ( तै० सं० १ । ५ । ७ ) ।

सा० भा०—अस्याऽऽदित्यस्य रोचना दीप्तिः प्राणादुच्छ्वाससदृशादुदयादपानती निःश्वासतुल्यमस्तमयं गच्छन्ती द्यावापृथिव्योरन्तश्चरति । महति मण्डले सीदतीति महिष आदित्यः सुवः स्वर्गं व्यख्यद्यजमानेभ्यः प्रकाशितवान् । आदित्यरूपेण स्तूयमान हे आहवनीय त्वामादधामि । अत्रास्ति कश्चिद्विशेषः । भगवताऽऽपस्तम्बेन भूमिर्भूम्ना इत्यारभ्य महिषः सुव इत्यन्ता मन्त्राश्चत्वारो ब्राह्मणे पुनराधेये पठिता अपि अग्न्याधेये विनियुक्ताः । गुणोपसंहारे प्रवृत्तस्य भगवत आपस्तम्बस्यालंकारभूतं त्वेतत् । अतोऽस्माभिर्भाष्य आहवनीय, इति संबुद्धिः प्रयुक्ता । भाष्ये तु गार्हपत्य इति भाषितम् । पुनराधेयसूत्रेऽपि भूमिर्भूम्नेति सर्पराज्ञीभिर्गार्हपत्यमादधाति ( आप० श्रौ० ५ । २७ । ९ ) । ब्राह्मणमपि तत्रत्यं सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादध्यात् तै० ( सं० १।५ । ४ ) । बौधायनस्तु बहुशो यथाब्राह्मणमेव सूत्राणि प्रणिनायेति विदिताखिलसूत्राणां नानधिकतरम् । एतेन श्रौते कर्मणि गुणोपसंहारः प्रायो नेष्टस्तस्येति सुविदितं भवति । इतःपरं सुधीभिराकलनीयो विशेषः ।

अग्ने सम्राडजैकपादाहवनीय दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय । पृथिव्यास्त्वा मूर्धन्सादयामि यज्ञिये लोके । यो नो अग्ने निष्ट्यो योऽनिष्ट्यो भिदासतीदमहं तं त्वयाऽभिनिदधामि ॥१७॥ (आप. श्रौ. ५ । १५ । ६ ) ।

+ अजैकपादित्यग्निनाम । आहवनीयः । अन्यत्पूर्वं व्याख्यातम् ।

आनशे व्यानशे सर्वमायुर्व्यानशे ॥१८॥ ( तै. ब्रा. १ । २ । १ ) ।
अहं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव योनिरस्मि ।
ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेदः ॥ ( तै० ब्रा० १ । २ । १ ) ।

सा० भा०—अयमग्निरानशे भोक्तृदेहं व्याप्तवान् । व्यानशे विविधं भोग्यजातं व्याप्तवान् । तथा सर्वमायुरपमृत्युपरिहारेण व्यानशे व्याप्तवान् । हे आहवनीयाग्नेऽहं

त्वत्तो हेतोरस्मि । यदा त्वमासीस्तदानीमहमस्मि । यदा तु त्वं नासीस्तदानीं विद्यमानोऽप्यहं निष्प्रयोजनत्वेन नास्मि । त्वं च मदसि मत्तो हेतोर्जायसे । एतच्च प्रत्यक्षम् । एवमुक्तप्रकारेण मम योनिः कारणं त्वमसि । तवापि योनिः कारणमहमस्मि । तस्मान्ममैव बन्धुः सन्मदीयानि हव्यानि वह । हे जातवेदो यथा लोके पुत्रः पित्रे लोककृत्पुण्यलोकसंपादको भवति तद्वदतिस्नेहेन मम लोककृद्भव ।

अग्न आयूꣳषि पवस आसुवोर्जमिषं च नः ।

आरे बाधस्व दुच्छुनाम् ॥९९॥ ( तै० सं० १ । ५ । ६ ) ।

सा० भा०—हे अग्ने पुत्रपौत्रादियुक्तानामस्माकमायूंषि पवसे शोधयसि । अपमृत्युं परिहरसीत्यर्थः । सोऽस्माकमूर्जं बलमिषमन्नं चासमन्तात्सुव प्रेरय । देहीत्यर्थः । दुच्छुनां वैरिसेनामारे दूरे बाधस्व निराकुरु ।

अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधत्पोषꣳ रयिं मयि ॥ १०० ॥ ( तै० सं० १ । ५ । ६ ) ।

सा० भा०—सकारान्तोऽपःशब्दः कर्मवाची शोभनमपः कर्म यस्यासौ स्वपाः । हे अग्ने त्वं स्वपाः सन्नस्मै अस्मान्पवस्व शोधय । मयि ब्रह्मवर्चसं व्यवहारसामर्थ्यं पुष्टिं धनं च स्थापय ।

अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ।

तमीमहे महागयम् ॥१०१॥ ( तै० आ० २ । ५ ) ।

योऽग्निर्ऋषिरतीन्द्रियज्ञानवान्पवमानः शोधनशीलः । निषादपञ्चमा वर्णाः पञ्चजनाः । तेषु भवः पाञ्चजन्यः । पुरोहितः सर्वकर्मसु पुरस्तान्निहितस्तमेवंगुणमग्निं महागयं महागृहमीमहे प्राप्नुमः ।

समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥१०२॥
( ऋ. सं. अ. ३ अ. ८ व. १० ) ।

वयं नाम प्रब्रवामा घृतेनास्मिन्यज्ञे धारयामा नमोभिः ।
उपब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् ॥१०३॥
( ऋ. सं. अ. ३ अ. ८ व. १० ) ।

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ॥ १०४ ॥
( ऋ. सं. अ. ३ अ. ८ व. १० ) ।

सा०भा०—संमोदन्तेऽस्मिन्यजमाना इति समुद्रोऽग्निः पार्थिवः, अरणीभ्यां मथितोऽग्निस्तस्मादूर्मिरूर्मिवदुपर्युपर्युद्भूतो मधुमान्माधुर्योपेतफलसमूहः । उदारत् उद्गच्छति । अंशुना दीप्त्या अमृतत्वं देवत्वम् । "अपाम सोमममृता अभूम" ( तै० सं० ३।२।५) इति श्रवणादमृता इत्यत्र विद्यारण्या देवा इति व्याचख्युः । तदेवात्रास्माभिर्गृहीतममृतत्वं देवत्वमुपसमानट् । उपेति पूरणः । प्राप्नोति नरः । घृतस्य

दीप्तिमतः समिद्द्रव्यस्य। विद्यारण्यास्तु दीप्तस्य गुह्यं नाम नमनसाधनं यदस्ति तद्ब्रवीमि तद्देवानां जिह्वा, आस्वादकजिह्वास्थानीयं भवति। तदेवामृतस्य देवत्वस्य नाभिर्धारकं तदुभयं घृतस्य नामेत्यर्थः। एवं मन्त्रद्वये तत्तत्पक्षानुसारेण योज्यम्। वयं यजमाना घृतस्य नाम प्रब्रवाम स्तुमः। अस्मिन्यज्ञे नमोभिर्नमस्कारैर्हविर्भिर्वा धारयाम च। ब्रह्मा परिवृढो देवः शंस्यमानं स्तूयमानमिदमुपशृणवच्छृणुयात्। चतुःशृङ्गः, चत्वारि शृङ्गाणि वेदचतुष्टयरूपाणि यस्य। गौरो गौरवर्णस्तादृशो देव एतत्कर्म जगद्वा अवमीत्, उद्गिरति निर्वहतीत्यर्थः। अस्य यज्ञात्मकस्याग्नेश्चत्वारि शृङ्गाणि चत्वारो वेदाः शृङ्गस्थानीयाः। यद्यप्यापस्तम्बेन यज्ञं व्याख्यास्यामः। स त्रिभिर्वेदैर्विधीयत इत्युक्तं तथाऽप्याथर्वणस्येतरानपेक्षयैवैकाग्निसाध्यानां कृत्स्नकर्मणामभिधायकत्वात्। तदपेक्षया चत्वारि शृङ्गा इत्युक्तम्। त्रयो अस्य पादाः सवनानि त्रीणि अस्य पादाः प्रवृत्तिसाधनत्वात्पादा इत्युच्यन्ते। द्वे शीर्षे ब्रह्मौदनं प्रवर्ग्यश्च,इति। सोमप्राधान्येनेदमुक्तम्। सप्त हस्तासः सप्त च्छन्दांसि हस्ता मुख्यसाधनम्। छन्दांस्यपि देवताप्रीणनस्य मुख्यसाधनमिति हस्तव्यवहारः। त्रिधा बद्धो मन्त्रब्राह्मणैस्त्रिप्रकारं बद्धः। बन्धननस्य तन्निष्पाद्यत्वात्। वृषभः फलानां वर्षिता। रोरवीति भृशं शब्दायते। ऋग्यजुःसामोक्तैः शस्त्रयागस्तुतिरूपैर्होत्राद्युत्पादितैर्ध्वनिभिरसौ रौति। एवं महो देव एष यज्ञात्मा महानुभावो देवो मर्त्यानाविवेश। मर्त्यैर्यजमानैर्निष्पाद्यत्वात्प्रवेश उच्यते।

**प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।**

**त्वाꣳ शश्वन्त उपयन्ति वाजाः ॥१०५॥** (तै० ब्रा० ४।६।५)।

सा० भा०—हे अग्ने प्रेद्धः पूर्वमपि प्रकर्षेण दीप्तस्त्वं पुरो नोऽस्माकं पुरोदेशे। अजस्रया निरन्तरवर्तिन्या सूर्म्या सूर्मिसमानया ज्वालया दीदिहि पुनरपि दीप्यस्व। ज्वलन्ती लोहमयी स्थूणा सूर्मी। हे यविष्ठ युवतमाग्ने त्वां शश्वन्तो निरन्तरभाविनो वाजा अन्नान्युपयन्ति सामीप्येन प्राप्नुवन्ति।

**विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे ।**

**यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवीꣳषि जुहुरे समिद्धे ॥१०६॥**

(४।६।५)।

सा० भा०—हेऽग्ने ते तव परमे जन्मनि विधेम वयं ज्ञानेन परिचरेम। सधस्थेऽस्माभिः सह स्थातुं योग्येऽवरे निकृष्टे भूलोकवर्तिनि जन्मनि स्तोमैः स्तोत्रैर्विधेम परिचरेम। यस्माद्योनेरिष्टकाचितिरूपात्स्थानादुदारिथ त्वमुद्गत आविर्भूतोऽसि तं योनिं यजे विधिपूर्वकं द्रव्यं देवतोद्देशेन त्यक्ष्ये। समिद्धे सम्यक्प्रज्वलिते त्वयि हवींषि प्रजुहुर ऋत्विजः प्रकर्षेण जुह्वति।

**ता॑सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम् ।**
**यामस्य कण्वो अदुहत्प्रपीना॑ सहस्रधारां पयसा महीं गाम् ॥१०७॥**
**(४।६।५)।**

सा० भा०—पुरा कदाचित्कण्वाख्यो महर्षिरस्याग्नेर्यां सुमतिमनुग्रहकारिणीं बुद्धिमदुहत्, दुग्धवान् । तत्र दृष्टान्तः—प्रपीनां प्रभूतः पीनः स्तनसंघो यस्याः सा प्रपीना तां सहस्रसंख्याकाः क्षीरधारा यस्याः सा सहस्रधारा तां महीं पयसा क्षीरेण संपूर्णां गां धेनुं यथा लौकिका दुहन्ति तद्वत् । अयमग्नेः सुमतेरुपदर्शितबुद्धेः स्वाभीष्टं फलं प्राप्तवान् । वरेण्यस्य सर्वैर्वरणीयस्य सवितुः प्रेरकस्याग्नेः संबन्धिनीं तां कण्वेन दुग्धां सुमतिमहमावृणे सर्वतः प्रार्थये । कीदृशीं सुमतिम् । चित्रां स्वापेक्षितबहुविधफलप्रदानसमार्थामित्यर्थः । विश्वं जन्यमुत्पाद्यं यस्याः सा विश्वजन्या तां जगदुत्पादनसमर्थामित्यर्थः ।

**सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि ।**
**सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन ॥१०८॥**
**(तै. सं. ४।६।५) ।**

सा० भा०—हे अग्ने तव समिधः सप्तसंख्याका अश्वत्थोदुम्बरपलाशशमीविकङ्कताशनिहतवृक्षपुष्करपर्णरूपाः । ज्वालारूपा जिह्वाश्च सप्त—काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा ॥ स्फुलिङ्गिनी विश्वरुची च देवी लोलायमाना, इति सप्त जिह्वाः॥ ऋषयो मन्त्राः। ते च यथोक्तसमित्संपादनार्थाः सप्तसंख्याकाः, अश्वो रूपं कृत्वा इत्यादयः समाम्नाताः। प्रियाणि धाम स्थानानि—आहवनीयगार्हपत्यदाक्षिणाग्निसभ्यावसथ्य प्राजाहिताग्नीध्रियाख्यानि सोमयागे वह्निधारकाणि सप्तसंख्याकानि । होत्रा होतृप्रमुखा वषट्कर्तारो होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽग्नीध्रोऽच्छावाकश्चेति सप्तसंख्याकास्त्वां यजमानाः सप्तधा यजन्ति । (अत्र वयमृत्विजो यजन्ते इति सुवचम् । नहि यजमानाः परफलप्राप्त्यर्थं यजनं कुर्वन्ति। नापि ऋत्विजः स्वफलभागिनो भवन्ति)। अग्निष्टोमः अत्यग्निष्टोमः उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामो वाजपेयश्चेति सप्त प्रकाराः। तादृशस्त्वं सप्त योनीराहवनीयादिस्थानानि घृतेन सर्वतः पूरय ।

**उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् ।**
**देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ १०९ ॥**
**(तै० सं० ४।१।७)।**

सा० भा०—वयं तमस उत्तरं ज्योतिस्तमसो विनाशकत्वेनोत्कृष्टमाग्निसंबद्धं ज्योतिरुत्परिपश्यन्त उत्कर्षेण सर्वतोऽवलोकयन्तो देवत्रा देवेषु मध्ये सूर्यं देवं सूर्यरूपेण वर्तमानमाग्निसंबद्धमेवोत्तमं ज्योतिरगन्म प्राप्ताः स्मः ।

**उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम ॥११०॥( तै० सं० १।४।४३ )।**

सा० भा०—केतवो रश्मयः जातवेदसं तमग्निसदृशं देवमुद्वहन्ति, ऊर्ध्वदेश एव प्रापयन्ति । किमर्थम् । विश्वाय कृत्स्नस्य जगतः सूर्यं दृशे द्रष्टुम् ।

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्ष॰ सूर्य आत्मा जगतस्तस्थुषश्च ॥१११॥
(तै० सं० १।४।४३)।

सा० भा०—चित्रं रक्तश्वेतादिविविधवर्णं देवानां रश्मीनामनीकं सैन्यसदृशं मण्डलमुदगादुदयं गच्छति । कीदृशम् । मित्रादिदेवोपलक्षितस्य कृत्स्नस्य प्राणिजातस्येन्द्रियाधिष्ठातृत्वाच्चक्षुःस्थानीयम् । तन्मण्डलस्थः सूर्यो जगतो जङ्गमस्य तस्थुषः स्थावरस्य चाऽऽत्मा सँल्लोकत्रयमाप्राः पूरितवान् ।

अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु ।
अग्ने तदस्य कल्पय त्व॰ हि वेत्थ यथातथम् ॥ ११२ ॥
(तै० ब्रा० ३।७।११)।

सा० भा०—यज्ञस्य संबन्धि कियदङ्गमनाज्ञातं शास्त्रक्रमेणास्माभिरज्ञातं यद्यप्याज्ञातं सम्यग्विज्ञातं सन्मिथु क्रियते मिथ्या क्रियते ज्ञानादज्ञानाद्वाऽन्यथाऽनुष्ठीयते । हेऽग्नेऽस्य कर्मणः संबन्धि तत्सर्वमङ्गं कल्पय फलप्रदानसमर्थं कुरु । हि यस्मात्कारणात्त्वं यथातथं कर्मणो वस्तुतत्त्वं वेत्थ ।

पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः
अग्ने तदस्य कल्पय त्व॰ हि वेत्थ यथातथम् ॥ ११३ ॥
(तै० ब्रा० ३।७।११)।

सा० भा०—यो यज्ञः सोऽयं पुरुषसदृशो यथा पुरुषोऽयमन्यूनातिरिक्तविशिष्टावयवस्तथा यज्ञोऽपि । किंचायं यज्ञः पुरुषसंमितः पुरुषेण सम्यग्निर्मितश्च । यस्मादेवं तस्माद्धेऽग्ने ।

यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्तासः ।
अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवा॰ ऋतुशो यजाति
॥ ११४ ॥ (३।७।११)।

सा० भा०—पाको बालस्तद्वदन्यैस्त्रायन्ते रक्ष्यन्त इति पाकत्रा बालवदप्रबुद्धमतयो दीनदक्षाः क्षीणोत्साहा मर्तासो मनुष्या यजमाना यज्ञस्य यदङ्गं मनसा स्वकीयेन न मन्वते नावबुध्यन्ते तदङ्गं विजानन्क्रतुवित्कृत्स्नयागाभिज्ञो यजिष्ठोऽतिशयेन यष्टुं समर्थो होता देवानामाह्वाताऽग्निर्देवान्यष्टव्यानृतुशो यजाति तत्तदृतुकाले पूजयतु ।

त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽवयासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषा॰सि प्रमुमुग्ध्यस्मत्
॥११५॥ (तै० सं० २।५।१२)।

सा० भा०—हे अग्ने त्वं नोऽस्माकं भक्तिं विद्वान्सन्वरुणस्य देवस्य हेडोऽस्मद्विषयं क्रोधमवयासिसीष्ठा अपनय । यजिष्ठो यष्टृतमोऽतिशयेन यागनिष्पादको वह्नितमोऽतिशयेन देवहविर्वोढा शोशुचानोऽत्यन्तं दीप्यमानो विश्वा द्वेषांसि सर्वान्विरोधिकृतान्द्वेषानस्मत्प्रमुमुग्ध्यस्मत्तः प्रमोचय ।

**स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।**
**अवयक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि ॥११६॥**

सा० भा०—हे अग्ने स त्वं नोऽस्माकमत्या रक्ष नावमो भव रक्षको भव । कीदृशस्त्वमस्या उषसो व्युष्टा नेदिष्ठोऽद्यतनस्योषःकालस्योपरितने प्रातःकालेऽत्यन्तं प्रत्यासन्नोऽस्माकं वरुणं वरुणेन कृतमभीष्टनिवारकं पापादिकमवयक्ष्व नाशय । रराणो रममाणः सन् मृडीकं सुखसाधनमस्मदीयं हविर्वीहि भक्षय । ततो नोऽस्माकं सुहव एधि सुखेनाऽऽह्वातुं शक्यो भव ।

**त्वमग्ने अयास्ययासन्मनसाहितः। अयासन्हव्यमूहिषेऽया नो धेहि भेषजम् ॥ ११७ ॥ ( तै० ब्रा० २ । ४ । १ ) ।**

सा० भा०—हे अग्ने त्वमयासि सर्वगतोऽसि । अयासन्सर्वगत एव सन्यजमानस्य मनसा क्वचित्प्रदेशविशेष आहितः। अयासन्स्वभावतः सर्वगत एव सन्हव्यमूहिषे क्वाचित्क इव देशान्तरे हविर्वहसि । अयाः सर्वगतः सन्नोऽस्माकं भेषजं धेहि संपादय ।

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे ॥११८॥**
**( तै० सं० १ । २ । १३ ) ।**

सा० भा०—विष्णुस्त्रिविक्रमावतारं धृत्वेदं विश्वं विभज्य क्रमते स्म । भूमावेकपदमन्तरिक्षे द्वितीयं दिवि तृतीयमित्येवं त्रेधा पदं निदधे । पांसवो भूम्यादिलोकरूपा यस्य पदस्य सन्ति तत्पांसुरम् । अस्य विष्णोस्तस्मिन्पदे विश्वं समूढं सम्यगन्तर्भूतम् ।

**त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।**
**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥ ११९ ॥**
**( तै० सं० १ । ८ । ६) ।**

सा० भा०—शोभनः शरीरगन्धः पुण्यगन्धो वा यस्यासौ सुगन्धिः । पुष्टिं शरीरधनादिविषयां वर्धयतीति पुष्टिवर्धनस्तादृशं त्र्यम्बकं त्रीण्यम्बकानि नेत्राणि यस्यासौ त्र्यम्बकः । (भगवान्रुद्रः)। तं यजामहे विधिपूर्वकं द्रव्यमग्नौ प्रक्षिपामहे । लोके यथा उर्वारुकफलानि बन्धनाद्वृन्तात्स्वयमेव मुच्यन्ते तद्वदहं त्र्यम्बकप्रसादेन मृत्योर्मुक्षीय मोचनयुक्तो भूयासम् । अमृताच्चिरजीवितात्स्वर्गाद्वा मा मुक्षीय ।

**आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः**
**यदा स्तोतृभ्यो महिगोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम**
**॥ १२० ॥ ( तै० ब्रा० ३ । ७ । ११ ) ।**

सा० भा०—हे हरिवोऽश्वयुक्तेन्द्र आभिर्गीभिरस्मदीयस्तुतिभिर्वर्धमानस्त्वमतोऽस्मात्कर्मण ऊनमङ्गं नोऽस्मदर्थमाप्याययाभिवर्धय । हे हरिवो यदा यस्मिन्काले स्तोतृभ्यः स्तोत्रनुग्रहार्थं महिगोत्रा महतः पर्वतान्मेघान्वा रुजासि भग्नान्करोषि अध अथ तदा वयं ते तवानुग्रहाद्भूयिष्ठभाजः स्याम प्रभूतधनानां लब्धारो भूयास्म ।

यद्विद्वाꣳसो यदविद्वाꣳसो मुग्धाः कुर्वन्त्यृत्विजः ।
अग्निर्मा तस्मादेनसः श्रद्धा देवी च मुञ्चताम् ॥ १२१ ॥
(आप० श्रौ० ३ । १२ । १ ) ।

+ विद्वांसः प्रयोगज्ञास्तथाऽप्यविद्वांसः प्रयोगतत्त्वानभिज्ञा मुग्धा अविवेचका ऋत्विजो यदशास्त्रीयं कुर्वन्ति । कुर्वन्ति स्मेत्यर्थः । तस्मादेनसोऽशास्त्रीयानुष्ठानजन्यप्रत्यवायान्मा मामग्निः श्रद्धा देवी च मुञ्चताम् ।

पुनस्त्वाऽऽदित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ।
घृतेन त्वं तनुवो वर्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥ १२२ ॥
( तै. सं. ४ । २ । २ ) ।

सा० भा०—हे अग्ने त्वामादित्या रुद्रा वसवश्च पुनः समिन्धतामुपशान्तं पुनः संदीपयन्तु । हे वसुनीथ वसूनां धनानां नीथ प्रापयितर्ब्रह्माणो ब्राह्मणा ऋत्विजो यज्ञैर्निमित्तभूतैस्त्वां पुनः समिन्धताम्। त्वं घृतेन तुष्टः संस्तनुवोऽस्मदीयशरीराणि वर्धयस्व । तत्त्वतस्त्वयि तुष्टे सति यजमानस्य कामाः सत्याः सन्तु ।

ये अग्नयो दिवो ये पृथिव्याः समागच्छन्तीषमूर्जं दुहानाः ।
ते अस्मा अग्नयो द्रविणं दत्त्वेष्टाः प्रीता आहुतिभाजो भूत्वा ।
यथालोकं पुनरस्तं परेत स्वाहा ॥१२३॥ आप०श्रौ०५।१८।१) ।

+ इषमन्नमूर्जं रसं च दुहानाः पूरयन्तो येऽग्नयो दिवः पृथिव्याश्च समागच्छन्ति, इष्टा हुतास्तेऽग्नयोऽस्मै यजमानाय द्रविणं धनं दत्त्वाऽऽहुतिभाजो हुतद्रव्यसेविनः प्रीता भूत्वा यथालोकं स्वस्वलोक इत्यर्थः । पुनरस्तं गृहं परेत गच्छत स्वाहा । अथवा यथालोकं स्वलोकं गत्वा पुनरस्तं यजमानगृहं परेत प्रत्यागच्छत स्वाहा ।

अथर्व पितुं मे गोपायान्नं प्राणेन संमितम् ।
त्वया गुप्ता इषमूर्जं मदन्तो रायस्पोषेण समिषा मदेम ॥१२४॥
( आप० श्रौ० ५ । १८ । २ ) ।

+ हे अथर्व चतुर्वेदप्रवर्तकाचार्यरूप दक्षिणाग्ने ! पितुं पालकं मे मदीयं प्राणेन संमितं समानमन्नं गोपाय रक्ष । त्वया गुप्ता रक्षिता इषमन्नमूर्जं रसं मदन्तो मदयन्त आनन्दयन्त इत्यर्थः । रायस्पोषेण द्रव्यपोषकेण समिषा शोभनान्नेन मदेम हर्षयुक्ता भवेम ।

नर्य प्रजां मे गोपाय मूलं लोकस्य संततिम् ।
आत्मनो हृदयान्निर्मितां तां ते परिददाम्यहम् ॥ १२५ ॥
( १५ । ८ । २ ) ।

+ नर्य नरेभ्यो मनुष्येभ्यो हितो गार्हपत्यस्तत्संबुद्धिः । मे मम लोकस्य पितृलोकस्य मूलं निदानभूतां संततिं विस्तृतिशालिनीमात्मनो हृदयान्निर्मितामौरसीं प्रजां गोपाय । तां संततिमहं ते तुभ्यं परिददामि । मत्संततिस्त्वैव परिचरणं करोत्वित्यर्थः ।

शꣳस्य पशून्मे गोपाय विश्वरूपं धनं वसु ।
गृहाणां पुष्टिमानन्दं ताꣳस्ते परिददाम्यहम् ॥ १२६ ॥
( आप० श्रौ० ५ । १८ । २ ) ।

+हे शंस्य । ऋत्विग्भिः प्रशंसनीयरूपत्वाच्छंस्य आहवनीयस्तत्संबुद्धौ । मे मम पशून्गोपाय रक्ष । तथा विश्वरूपं बहुविधं वसु स्थिरं धनं जङ्गमं द्रव्यं तथा गृहाणां लक्षणया गृहस्थितानां दारादीनां पुष्टिं पोषणमानन्दं गोपाय रक्ष । तानेतान्सर्वानहं तुभ्यं परिददामि । मदीयपशुवस्वादिकं सर्वं त्वदर्थमित्यर्थः ।

पञ्चधाऽग्नीन्व्यक्रामद्विराट् सृष्टा प्रजापतेः ।
उर्ध्वारोहद्रोहिणी योनिरग्नेः प्रतिष्ठितिः ॥१२७॥( तै॰ब्रा॰ ) ।

सा० भा०—प्रजापतेः संबन्धिनी येयं सृष्टा विराड् विशेषेण राजमाना गोशरीरधारिणी तानेतानग्नीन्पञ्चधा व्यक्रामद्विभज्य क्रान्तवती । अस्मिन्प्रदेशे गार्हपत्योऽस्मिन्नाहवनीय इत्येवं पदेनाऽऽक्रम्य दर्शितवतीत्यर्थः। सा पुनः स्वस्याः प्रयोजनविशेषमेव पश्यन्त्यूर्ध्वाभिमुखी द्युलोकमारोहत् । आरुह्य च रोहिण्यभूत् । सा चाग्नेर्योनिः कारणभूता प्रतिष्ठाहेतुश्च रोहिणीनक्षत्रेऽग्निनामाधेयत्वात् ।

॥ इत्याधानप्रयोगमन्त्रभाष्यम् ॥

## अथाऽऽधाने गेयमानानि सामानि ।

रथंतरं साम—

अभि त्वा शूर नोनुमो दुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥
न त्वा वाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥१॥

वामदेव्यं साम—

कया नश्चित्र आभुवदूती सदा वृधः सखा ।
कया शचिष्ठया वृता ॥
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।
दृढा चिदारुजे वसु ॥
अभीषुणः सखीनामविता जरितृणाम् ।
शतं भवास्यूतिभिः ॥ २ ॥

बृहत्साम—

त्वामिद्धि हवामहे साता वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्ववर्तः ॥
स त्वं नश्चित्र वज्रहस्त धृष्णुया महस्तवानो अद्रिवः ।
गामश्वं रथ्यमिव संकिर सत्रा वाजं न जिग्युषे ॥ ३ ॥

वारवन्तीयं साम—

अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।
संम्राजं तमध्वराणाम् ॥
सघा नः सूनुः श्रवसा पृथु प्रगामासुशेवः ।
मीढ्वाँ अस्माकं बभूयात् ॥
स नो दूराच्चासाच्च निमर्त्यादघायोः ।
पाहि सदमिद्विश्वायुः ॥ ४ ॥

श्यैतं साम—

अभि प्र वः सुराधसमिन्द्रमर्चयथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥
शतानीकेव प्रजिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।
गिरेरिव प्ररसा अस्य पिन्विरे दत्राणि पुरुभोजसः ॥५॥

यज्ञायज्ञीयं साम—

यज्ञायज्ञावो अग्नये गिरा गिरा च दक्षसे ।
प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥
ऊर्जोनपातं सहिनायमस्मयुर्दाशेम हव्यदातये ।
भुवद्वाजेष्ववविता भुवद्वृध उत त्राता तनूनाम् ॥ ६ ॥

मन्थनारम्भणकालसामानि——

अरण्योर्निहितो जातवेदा गर्भ इव सुधितो गार्भिणीषु ।
दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ १ ॥
अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् ।
दूरेदृशं गृहपतिमथर्युम् ॥ २ ॥
त्वेषस्ते धूम ऋण्वति दिविषञ्छुक्र आततः ।
सूरो न हि द्युतात्वं कृपा पावक रोचसे ॥ ३ ॥
अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः ।
उपोषु जातमार्यस्य वर्धनमग्निं नक्षन्तना गिरः ॥ ४ ॥
अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥ ५ ॥

समाप्तान्याधाने गीयमानानि सामानि ॥

# अथाऽऽधानमीमांसा ।

तत्र तावत्प्रथमतो मीमांसास्वरूपं शिष्टैरुपवर्णितं यथावद्वयं संगृह्णीमः । वेदार्थावगमार्थैत्र परमकारुणिको भगवाञ्जैमिनिरसुसूत्रद्धर्मसूत्राणि—अथातो धर्मजिज्ञासेत्यादीनि । तदेतेषामल्पाक्षराणामसंदिग्धानां सारवतां विश्वतोमुखानामस्तोभानामनवद्यानां चोपवर्षादिभिर्वृत्तिकारैर्व्याख्यातानामपि यथावदर्थग्रहणं न सर्वैः सुशकमित्यवभिपश्यन्नानि भगवाञ्शबराचार्यः । यदीयं हि भाष्यं सुप्रसन्नमप्यतिगभीरमनितरसाधारण्या शय्ययाऽनन्यसुलभयोपपादनसरण्या चातिशेत एव भाष्यान्तराणि । तदत्र जानीमो यद्भाष्येणानेनैव देहातिरिक्तात्मस्वरूपवेदप्रामाण्यादिसमर्थनपरेण सुदूरमपासितं लोकायतमतं दर्शनपदेऽभिषिक्तं च मीमांसाशास्त्रमिति । तदत्र क्षणिकं विज्ञानं शून्यमेव वा परमतत्त्वमिति पौरुषेयो वेदो न प्रमाणपदवीमध्यास्त इति च सौगतमतावलम्बिभिः प्रतारितानातितरां सुनिमग्नान्दुरुपदेशजलधौ सुदूरं गतांश्च सनातनधर्मपथाद्दिधीर्षुर्भगवानवातारीत्सुरसेनानीः कुमारिलमूर्त्योदमुमूलत्सौगतनयं प्रत्यष्ठिपत्सनातनसमयं व्याचष्ट च शाबरं भाष्यमिति प्रमोदपरम्परेयं सर्वेषामस्माकम् । तदिदं न्यायसुधोपबृंहितमतिगभीरं न पारयति परिच्छेत्तुं गुरुरपीति गुरुमतावलम्बिभिरन्यथाऽन्यथा योज्यमानेषु न्यायेषु प्रवृत्ते चान्धगोलाङ्गूलन्यायेन लोकेऽन्वग्रहीषुरिमे पार्थसारथिमिश्राः सर्वतन्त्रस्वतन्त्रा न्यायरत्नमालाशास्त्रदीपिकान्यायरत्नाकरैस्तन्त्ररत्नेन च स्वकृतैरिति सुविशदं सर्वेषाम् । अत इदानीं वयमप्याधानमीमांसालेखनीं शास्त्रदीपिकानुसारमेव यथा सर्वैः सुसुखं ज्ञातुं सुशकं स्यादाधानमीमांसनं तथैव व्यापारयामः । तत्रेयं सरणिः—

प्रथमतो वेदवाक्यं ततो जैमिनेः सूत्रं ततस्तदर्थः । ततो याज्ञिकप्रवरस्य भगवत आपस्तम्बसूत्रं यथास्थितम् । ततो ग्रन्थकर्तुर्विचारपरिप्लुतपार्थसारथिमिश्रकृतमीमांसनम् । स्मरन्ति चात्र ग्रन्थकर्तारो मीमांसापद्धतिस्वरूपम्——

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
सिद्धान्तश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥

अत्र संगतिश्चेति वा पाठभेदः । क्वचिदुत्तरः पक्ष एव सिद्धान्तो भवति । क्वचित्पूर्वोत्तरपक्षाभ्यां निर्णीतस्ताभ्यामन्य एव सिद्धान्तो भवति । तदिदं पञ्चकमप्यत्र सुस्पष्टयामः । तत्र प्रथमत आधानविधिं मीमांसयामः । तत्रायं क्रमः—

'वसन्ता(ते) ब्राह्मणोऽग्निमादधीत । ग्रीष्मे राजन्य आदधीत । शरदि वैश्य आदधीत' (तै० ब्रा० १।१।२)। 'आधानेऽसर्वशेषत्वात्' (जै० सू० २।३।३)।

सूत्रार्थः—आधानविषये वसन्तादिवाक्यं प्रापकमेवासर्वशेषत्वादाधानस्य । कंचिदपि क्रतुं प्रति शेषत्वाभावेन क्रतुविधिभिराक्षेपतः प्राप्त्यभावादिति ।

'वसन्तो ब्राह्मणस्य ग्रीष्मो राजन्यस्य शरद् वैश्यस्य' ( आप० श्रौ० ५ । ३ । १८ )। अत्र मीमांसा—इत्यत्र किमाधाने कर्मणि ब्राह्मणादिनिमित्ते

वसन्तादिविधिः, उत ब्राह्मणादिवसन्तादिविशिष्टमाधानं विधीयत इति संशयः । तत्र 'यदि ब्राह्मणो यजेत' इत्यादौ ब्राह्मणादीनामप्राप्ततया राजसूयिकावेष्टिप्रयोगे गुणविधौ निमित्तत्वासंभवेन तद्विशिष्टप्रयोगान्तरविधिसंभवेऽपि प्रकृत आहवनीयादिसापेक्षक्रतुविध्याक्षेपलभ्याधाने ब्राह्मणादीनां प्राप्तानां निमित्तत्वसंभवेनाऽऽधाने ब्राह्मणादिनिमित्ते वसन्तादिविधिर्युज्यते। नन्वाधानस्यान्यतोऽप्राप्तत्वात्कथं तस्मिन्ब्राह्मणादिश्रवणस्य निमित्तार्थत्वम् । न च क्रतुविधेस्तदाक्षेपः संभवति । आधानविधावाहवनीयादिशब्दश्रवणाभावेन तस्य क्रतुविध्यपेक्षिताहवनीयादिसाधकत्वे प्रमाणाभावादिति चेन्न । 'नक्तं गार्हपत्यमादधाति' 'अर्धोदिते सूर्य आहवनीयमादधाति' इत्यादिवाक्येष्वाधानस्याऽऽहवनीयादेश्च साध्यसाधनभावावगमात् । यद्यपि तानि वाक्यानि गुणविधायकान्येव न त्वाधानविधायकानि तथाऽपि 'गार्हपत्यम्' इत्यादिद्वितीयया साध्यत्वानुवादिन्याऽऽधानस्य तत्साधनत्वावगमसंभवः । यद्वा 'य एवं विद्वानग्निमाधत्ते' इति सामान्यतः सर्ववर्णानामाधानविधायकमिति प्राप्ताधाने ब्राह्मणादिनिमित्ते वसन्तादिविधिरिति प्राप्ते, सिद्धान्तयति—

आधानेऽसर्वशेषत्वात् ॥ ४ ॥

आधाने विषये वसन्तादिवाक्यं ब्राह्मणादिवसन्तादिविशिष्टाधानप्रापकम्, न तु प्राप्ताधाने निमित्तसंयोगेन कालविशेषबोधकम् । कुतः । असर्वशेषत्वादाधानस्य सर्वक्रत्वर्थतया विधेरश्रवणात् । आधानविधिसद्भावे हि 'आदधीत' इत्यात्मनेपदबलादाधानसाध्याग्नीनां कर्तृगामित्वप्रतीत्या स्वीयाधानसाध्यत्वं लभ्यते । आक्षेपपक्षे तु 'कृत्तिकास्वग्निमादधीत' 'वसन्ते ब्राह्मणोऽग्निमादधीत' इत्यादिगुणवाक्येष्वात्मनेपदस्यानुवादत्वेनाविवक्षिततया क्रतुविधिभिराधानमात्राक्षेपेऽपि तस्य स्वकर्तव्यत्वे प्रमाणाभावात्परानुष्ठिताधाननिष्पन्नाग्नीनां क्रयादिना संपादनं स्यादिति कथं नियमेन क्रतुविधिभिराधानस्य प्राप्तिः। एवं चाऽऽधानस्य तदुद्देशेन नैमित्तिकगुणस्य च विधौ वाक्यभेदप्रसङ्गाद्ब्राह्मणादिवसन्तादिविशिष्टाधानविधिः। तथा च वसन्तादियुक्तप्रत्यक्षविधौ जाग्रति 'य एवं विद्वानग्निमाधत्ते' इत्यस्य वर्तमानापदेशस्य विधित्वकल्पनक्लेशोऽपि नानुभवितव्यो भवति । न चैवमपि वसन्तादिवाक्येष्वाहवनीयादिशब्दाभावादाधानोत्पन्नाग्नीनां कथं क्रत्वर्थता स्यादिति वाच्यम् । वसन्तादिवाक्येष्वाहवनीयादिग्रहणाभावेऽपि 'नक्तं गार्हपत्यम्' इत्यादिगुणवाक्येषु गार्हपत्यादीनां द्वितीययाऽऽधानसाध्यत्वानुवादबलेन वसन्तादिवाक्येऽग्निशब्दस्य गार्हपत्यादिपरत्वे पर्यवसानस्योक्तत्वादित्यन्यत्र विस्तरः। प्रयोजनं पूर्वपक्षे ब्राह्मणादिश्रवणस्य निमित्तार्थत्वाच्छूद्रस्याप्याधानम्। सिद्धान्ते

तु ब्राह्मणादिवाक्यानामेव विधायकत्वाच्छूद्रस्य पृथगाधानविध्यभावान्नाधानमिति । न च ब्राह्मणादिश्रवणस्य निमित्तार्थत्वेऽपि शूद्रस्योपनयनाभावेन विद्याभावादेव नाऽऽधानमिति वाच्यम् । समानजातीयत्वेन 'वसन्ते ब्राह्मणमुपनयीत' इत्यादिवाक्यानामपि पूर्वपक्षे निमित्तार्थत्वेन शूद्रस्याप्युपनयनसत्त्वेन विद्यासत्त्वादिति दिक् ।

वसन्ते विप्र आदध्यात्तत्रैवोपनयीत च ।
अनुवादः प्रापणं वाऽनुवादः कालसिद्धये ॥
अन्तरेणाग्निविद्याभ्यां कर्मानुष्ठित्यसंभवात् ।
कल्प्ते आधानोपनीती प्राप्ता विप्रादयस्ततः ॥
लौकिकाग्नेः पुस्तकाच्च तत्सिद्धेर्नास्ति कल्पनम् ।
कालविप्रादिसंयुक्तमतोऽप्राप्तं विधीयते ॥

याज्ञिकास्तु ब्राह्मणादिश्रवणं निमित्तार्थमेवेति मन्यन्ते । युक्तं चैतत् । तथा हि तैत्तिरीयके—'अग्नय आधातव्याः' इत्यस्याऽऽधानविधिः । तथा वाजसनेयकेऽपि संभरणकाण्डे द्वितीयाध्याये 'घ्नन्ति ह वा एतद्यज्ञम्' इति द्वितीयब्राह्मणे 'ते ह देवा अग्न्याधेयं ददृशुः' इत्युपक्रम्य 'अग्नीनादधीत' इत्याधानविधिः श्रूयते । षष्ठस्य तृतीये—'पुनराधेयमोदनवत्' 'द्रव्योत्पत्तेर्वोभयोः स्यात्' इत्यत्र भाष्यवार्तिकतन्त्ररत्नेषु च वक्ष्यते । ततश्चाऽऽधानस्य प्राप्तत्वान्न वसन्तादिवाक्येषु तस्य विधानं संभवति । अतो ब्राह्मणादिश्रवणमन्यतः प्राप्त आधाने निमित्तसंयोगार्थमित्येव युक्तम् । किंच क्रतुविधीनां क्रयसंपादितान्यदीयाहवनीयादिभिरपि शान्ताकाङ्क्षत्वात्तैराधानस्य नाऽऽक्षेपसंभव इत्यप्ययुक्तम् । 'यदि वाऽन्यस्याग्निषु यजेत यदि वाऽन्योऽस्याग्निषु यजेत अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्' इति प्रायश्चित्तविधानादेवान्यदीयाग्नीनामप्राप्तेः । अग्नित्यागे प्रायश्चित्तविधानाच्च । 'अहं त्वदस्मि मदसि त्वमेतत्, ममासि योनिस्तव योनिरस्मि, ममैव सन्वह हव्यान्यग्ने' इत्याधानोत्पन्नाग्न्युपस्थानमन्त्रवर्णेन 'अन्तर्वत्नीजन्यं जातवेदसम्, अध्वराणां जनयथः पुरोगाम्, आरोहतं दशतं शक्करीर्मम, ऋतेनाग्न आयुषा वर्चसा सह, ज्योग्जीवन्त उत्तरामुत्तरां समाम्, दर्शमहं पूर्णमासं यज्ञं यथा यजै' इत्यरण्यादानमन्त्रवर्णेन चाऽऽत्मीयाग्नीनामेव क्रत्वर्थतावगमाच्च । किंच यद्यस्मिन्नेवाधिकरणेऽन्यदीयाग्नीनां क्रतुषु व्युदासः क्रियेत तर्हि षष्ठस्य षष्ठे 'विहारस्य प्रभुत्वादनग्नीनामपि स्यात्' इत्यधिकरणस्यानुन्मेषः स्यात् । तत्र हि सत्रेष्वनाहिताग्नीनामप्यन्यदीयाग्निभिरधिकारं पूर्वपक्षयित्वा स्वीयाधाननिष्पन्नाग्निसाध्यत्वात्कर्मणामन्यदीयाग्निभिस्तस्य नाधिकार इति सिद्धान्तयिष्यते । अस्मिन्नाधिकरणेऽन्यदीयाग्नीनां क्रतुषु व्युदासे निश्चिते सति तादृशः पूर्वपक्षो न कथंचिदुन्मेषमर्हति । तस्माद्य ब्राह्म-

णादिग्रहणं निमित्तार्थमित्येव युक्तम् । पूर्वपक्षसिद्धान्तावपि विपर्ययेण प्रवर्तनीयौ । प्राप्त आधाने वसन्तादिवाक्यानि गुणविधायकान्येव । 'अग्नीनादधीत' इत्यविशेषेण विहितस्य तस्य सर्ववर्णसाधारणत्वादिति सूत्रयोजनाऽपि सूपपादा । न चैवं शूद्रस्याप्याधानं शङ्क्यम् । 'अध्वराणां जनयथः पुरोगाम्' 'दर्शमहं पूर्णमासं यज्ञं यथा यजे' इत्यादिमन्त्रवर्णत आधानस्य यज्ञार्थत्वावगमात् । 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति तस्य यज्ञनिषेधाच्छूद्रस्याध्ययनविध्यभावात् । 'न स्त्रीशूद्रौ वेदमधीयाताम्' इति तस्य विद्याप्रतिषेधाच्चेति । अत्र वयं ब्रूमः—यान्यत्र याज्ञिकोदाहरणानि दृश्यन्ते तानि विधायकानि न भवन्ति । तैत्तिरीयं वाक्यं तु तैत्तिरीयारण्यके श्रुतं तत्तु मतवैचित्र्यप्रस्ताव उदाहृतम् । विधिसरूपार्थवाद इत्यनन्यगतिका व्यवस्था । अन्यदपि तत्र तच्छब्दस्य सत्त्वान्न विधायकम् । तदुक्तम्—न्यायसुधायाम्—

सिद्धत्वद्योतनाद्वक्त्राभिमुख्यासंभवाद्विधौ ।
आत्मानि प्रेरणाभावान्निमित्तत्वाभिधानतः ॥
विधिशक्तिविहन्तृ स्याद्यच्छब्दादिचतुष्टयम् ।
प्राप्त्ययोगे तु तद्बाधात्कचित्स्यादविहन्तृता ॥ इति ।

पार्थसारथिमिश्रा अप्याहुः—

न तावत्क्रतुसामर्थ्यात्प्राप्तिरैकान्तिकी तयोः ।
सामान्यवचनं यत्तद्वर्तमानापदेशकम् ॥

यत्तु संभरणकाण्डे श्रुतमिति तदपि तत्र न पश्यामः । स्थितेऽप्यर्थवादघटितत्वात्तत्रापि निर्दिष्टैव गतिः । अन्यास्तु याज्ञिकमते प्रपञ्चिता युक्तयः समीचीना इति विभाव्याऽऽधानविधिमीमांसायां भगवद्भाष्यकारमतानुसरणमेव युक्तमित्युत्पश्यामः । यत्र त्वनन्यगतिर्नाम'न्यत्र विधायकत्वं नास्ति तत्र तु सत्यपि यच्छब्दे विधायकत्वमवश्यमभ्युपेतव्यम् । यथा—'यदाऽऽग्नेयोऽष्टाकपालोऽमावास्यायाम्' 'यदाहवनीये जुहोति' 'यत्पर्णशाखया वत्सानपाकरोति' इत्यादिस्थलेषु । इति श्रौतिप्रवराणां मीमांसकानां च नानधिगतचरम् । इत्यलमतिपल्लवितेन ।

'वर्षासु रथकारोऽग्निमादधीत' ।

'वचनाद्रथकारस्याऽऽधानस्यासर्वशेषत्वात्' (जै० सू० ६।१।१२)।

सूत्रार्थः—वचनाद्रथकारस्येदमाधानं तथाऽस्याऽऽधानस्य सर्वत्रैवर्णिकाधानापेक्षया परिशिष्टत्वादत्रैकवर्णिकरथकारस्यैवेदम् ।

'वर्षा रथकारस्य' (आप० श्रौ० ५ । ३ । १८) ।

'ये त्रयाणां वर्णानामेतत्कर्म कुर्युस्तेषामेव कालः' (५।३।१९) ।

मीमांसा—'वर्षासु रथकारोऽग्निमादधीत' इति । तत्किं ब्राह्मणादीनामेव रथकरणे निमित्तं वर्षाविधिरयमुत रथकारसंज्ञकस्यावान्तरवर्णस्याऽऽधानान्तर-

विधानमिति संशये द्विजानां विद्वत्त्वात्कालमात्रविधाने च लाघवात्तेषामेव कालवि-धिर्नाविदुषोऽवान्तरवर्णस्य विशिष्टाधानविधिरिति प्राप्ते रूढिबलेन योगबाधाद्वच-नबलाच्चाविदुषोऽप्यधिकारप्रतीतेरविधानात्। ऋभूणां त्वेति च मन्त्रवर्णादृभुसौ-धन्वनपर्यायस्यावान्तरवर्णस्य रथकारस्येदमाधानं विधीयते।

आपस्तम्बाचार्यसूत्रविरोधो जैमिनिसूत्रेण। तस्य सूत्रस्यायमर्थः—त्रिषु वर्णे-ष्वन्तर्भूता एव स्ववृत्तिकर्शिता ये रथं कुर्वन्ति तेषामयमाधानकालः। रथकारा-धानं ह्यग्निसंस्कारार्थं न भवति। रथकारस्याऽऽधाने सद्भावेऽप्याधानमात्रोपक्षीणे-नाऽऽधानविधिना क्रतुविधानकल्पनासंभवाद्विद्याभावेनोत्तरक्रत्वधिकारानुपपत्त्याऽ-ग्नीनां भाव्युपयोगराहित्येन संस्कारानर्हत्वात्। नहि प्रभाकरवदस्माभी रथका-रस्य क्रत्वधिकारोऽङ्गी क्रियते। तस्मादग्निगुणकमर्थकर्मेदमाधानम्। तच्च स्वर्ग-फलकम्—तैरग्निभिर्दाहश्च तस्येति मीमांसकाः।

‘ ग्रीष्मवर्षाशरत्सु क्षत्रियवैश्योपकृष्टाः ’ (आश्व०श्रौ०२।१।१३)।

अस्य सूत्रस्य विवरणसमये गार्ग्यनारायण इत्थं व्याचख्यौ—वैश्यस्तक्षकर्मो-पजीवी, उपकृष्ट इत्युच्यते। अयमुपकृष्टशब्दार्थं आपस्तम्बसूत्रमनुसरति। तेनाऽऽपस्तम्बाश्वलायनमते वर्णत्रयाद्बहिः क्रत्वधिकारिणो न सन्तीति सुविदितम्। तदत्र भगवान् कात्यायनोऽप्यसुसूच(त्र)त्। यथा—

‘रथकारस्याऽऽधाने ॥९॥ रथकारस्याऽऽधानेऽग्न्याधेयकर्मण्यधिकारो भवति। वर्षासु रथकार[अग्निं]आदधीतेति श्रुतेः। अत्रेदं संदिह्यते। किं त्रैवर्णिकानामन्यतमो रथकरणयोगाद्रथकार आहोस्विन्नियतं किंचिज्जात्यन्तरमिति। किं तावत्प्राप्तम्। त्रैवर्णिनामन्यतम एवेति। कुतः। सोऽपि हि रथं करोतीति योगाद्रथकार इत्युच्यते। तस्य च त्रैवर्णिकत्वादाधानं प्राप्तमेव। क्रतुमात्रं विधेयम्। तथा सत्येकार्थविधानाद्वाक्यभेदो न भवति लाघवं च। जात्यन्तरपक्षे तु तस्याऽऽधानं विधातव्यम्। क्रतुसंबन्धश्च। तथा सति वर्षास्वादधीत रथकार आदधीतेत्येवं वाक्यभेदः स्यात्। अपि च शूद्रस्त्वसामर्थ्यात्प्रतिषिद्धः। तस्मात्त्रैवर्णिकाना-मन्यतम एवेति पूर्वः पक्षः। सिद्धान्तमाह—

नियतं च ॥ १० ॥ चो वार्थे। वाशब्दश्च पूर्वपक्षनिरासार्थः। न त्रैव-र्णिको रथकारस्तस्य शिल्पोपजीवनस्य प्रसिद्धत्वात्। किंतु नियतं जात्यन्तर-मेव। तत्र केचिदेवमाहुः—वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः। शूद्रायां वैश्यादुत्प-न्ना करणी। तस्यां करण्यां माहिष्यादुत्पन्नो रथकार इति। तदुक्तं स्मृतौ—माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्। शूद्रायां करणी वैश्यादिति। याज्ञवल्क्योऽपि—वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ। वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः (१।९२) ॥ विन्नासु विधिना परिणी-तासु। तथा—माहिष्येण करण्यां तु रथकारः प्रजायते ( १।९५ ) इति।

अतो रथकारशब्द एवंविधसंकरजातो रूढः । रूढिश्च योगाद्बलीयसीति न्याच्यात्वं करोतीति योगं बाधित्वा जात्यन्तरमेव रथकारशब्देनोच्यते । तस्येदमाधानं कालविशिष्टं विधीयते । विशिष्टविधानाच्च वाक्यभेदोऽपि न भवति । अपरे त्वाहुः—रथकारशब्देनात्र सौधन्वनानां ग्रहणम् । 'ऋभूणां त्वा' (४।२।५) इत्याधानमन्त्रवर्णात् । सौधन्वनाश्च ऋभवः । 'सौधन्वना ऋभवः' [ऋ० सं०(३।६०।४)इति सामानाधिकरण्यनिर्देशात् । तथा चाऽऽह मनुः—व्रात्यात्तु जायते वैश्यात्सुधन्वा चाऽऽर्य एव च । कारुषश्च विजन्मा च मैत्रः सात्वत एव च ॥ (१०।२३)इति। अतो मनूक्तो यः सुधन्वा व्रात्यवैश्यपुत्रस्तत्पुत्राणां सौधन्वनानामृभूणामेवात्राधिकारः। यस्तु याज्ञवल्क्येनोक्तो न तस्याधिकारः। सत्यपि रथकारशब्दवाच्यत्वे मन्त्रवर्णाच्छागन्यायेन सौधन्वनानामेवाधिकार इति । तथा च जैमिनिः—'सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात्प्रतीयेरन्'(६।१।४६)इति। सौधन्वना नाम जातिः। हीनास्ते किंचित्त्रैवर्णिकेभ्यो जात्यन्तरम् । न च ते शूद्रा न वैश्या न क्षत्रिया न ब्राह्मणा इति तेषामिदमाधानम् । कथम् । प्रसिद्धेर्मन्त्रवर्णाच्च । मन्त्रवर्णो हि भवति—सौधन्वना ऋभव इति । ऋभूणां त्वेति (४।९।५)। च रथकारस्याऽऽधानमन्त्रः। तस्मात्सौधन्वना ऋभवश्च रथकारा अपि च तं नेमिमृभवो यथेति च । ये नेमिं नमन्ति त ऋभव इत्युच्यन्ते । रथकाराश्च नेमिं नमन्ति तस्मादत्रैवर्णिकानामशूद्राणामेतदाधानमिति शबरस्वामिनः। ननु विद्याभावेन सौधन्वनानामसमर्थतयाऽनधिकारात्त्रैवर्णिक एवावयवव्युत्पत्त्या रथकारशब्देन किमिति न गृह्यते । सोऽपि हि रथकारो भवति । तस्य चाऽऽधानं प्राप्तमेवानूद्य ऋतुमात्रविधानाल्लाघवं भवति । जात्यन्तरे तु विशिष्टविधानाद्गौरवं स्यादित्याशङ्कायामुत्तरमाह——

नाभावादिति वात्स्यः ॥ ११ ॥ वात्स्य ऋषिरित्याह न त्रैवर्णिको रथकारः । कुतः । अभावात् । त्रैवर्णिकस्य रथकारस्याभावात्कथमभावो यौगिकोऽयं शब्दो रथं करोतीति रथकार इति । तेन यावत्कालं रथकरणसंबन्धस्तावत्कालं रथकार इत्युच्यते न सर्वदा । अतस्त्रैवर्णिकस्य रथकारस्याभावाद्विद्यारहितस्यापि ऋभुसौधन्वनसात्वतापरपर्यायस्य जात्यन्तरस्य रूढ्याऽवगतस्य वचनादाधानेऽधिकारो भवति ।

## अथर्तुनक्षत्रपर्वमीमांसा ।

'वसन्ते ब्राह्मणोऽग्निमादधीत । ग्रीष्मे राजन्य आदधीत । शरदि वैश्य आदधीत' (तै. ब्रा. १।१।२)। 'ऋभूणां त्वेति रथकारस्य' (तै. ब्रा. १।१।४)। 'हेमन्तो वा शरद्वैश्यस्य । शिशिरः सार्ववर्णिकः' (आप. श्रौ. ५।३।२०)। 'ग्रीष्मो हेमन्तश्च राजन्यस्य' ( सत्या०

श्रौ. ३ । २ ) । ' वर्षाः प्रजापशुकामवैश्यरथकृताम् ' ( कात्या० श्रौ. ४ । ७ ) । ' यस्मिन्कस्मिंश्चिदृतावादधीत ' ( आश्व. श्रौ. २ । १४ ) । सति संभव एत उक्ता ऋतवोऽवश्यं यथासंभवं संपादनीयाः । असंभवे तु " यस्मिन्कस्मिंश्चिदृतावयं पक्ष आश्रयणीयः । न ह्यङ्गानुरोधेनाङ्ग्यनुष्ठानम् । ऋतुनक्षत्रपर्वादीन्यङ्गानि । प्रधानमाधानम् । तत्र प्रमाणम्—' अथो खलु यदैवैनं यज्ञ उपनमेत् । अथाऽऽदधीत ' ( तै. ब्रा. १।१।२ ) । कल्पकारा अपि—' यदैवैनꣳ श्रद्धोपनमेदथाऽऽदधीत ' । ' सैवास्यर्धिः ' (बौधा.२।१२) । इति ऋतुविचारः । अथ नक्षत्राणि । कृत्तिकामारभ्य विशाखापर्यन्तं देवनक्षत्राणीति श्रुतम् । ' कृत्तिकाः प्रथमं विशाखे उत्तमम् । तानि देवनक्षत्राणि ' (तै.ब्रा.१।५।२) । सर्वं दैवं कर्म देवनक्षत्रेषु कार्यमिति न्यायः । तथाऽपि श्रुत्यैव तन्मध्ये कानिचिन्नक्षत्राणि आधानमनूद्य विहितानि । तानि कृत्तिका, रोहिणी, पुनर्वसू, पूर्वा फल्गुनी, उत्तरा फल्गुनी, (मघानक्षत्रानन्तरं विद्यमाने ) चित्रा, इति । तत्र निर्दोषं नक्षत्रं तु रोहिण्येव । बौधायनोऽपि ' रोहिण्या संपद्यते तस्यामादधीत ' ( बौ. श्रौ. २।१२ ) इत्युक्तवान् । आपस्तम्बाचार्या अपि ' सर्वाणि नित्यवदेके समामनन्ति ' (आप.श्रौ.५।३।१५) । सर्वशब्दः प्रकृतपरामर्शवाचकः । प्रकृतानि च नक्षत्राणि ' कृत्तिकाः, रोहिणी, मृगशीर्षं, पुनर्वसू, पूर्वा फल्गुनी, उत्तरा फल्गुनी, हस्तः, चित्रा, विशाखे, अनुराधाः, श्रवणम्, उत्तरा भाद्रपदाः ' इति । एतेषु यस्मिन्कस्मिन्नपि नक्षत्रेऽप्यादधीतेति आचार्येणान्येषामाचार्याणामभिप्रायः सूचितः । एतावता वसन्तादिऋतवः कृत्तिकादीनि नक्षत्राणि विहितानि । अथेदानीं पर्वविचारः—' अमावास्यायां पौर्णमास्यां वाऽऽधेयः ' (आप.श्रौ.५।३।१७)। ' अमावास्यायामग्न्याधेयम् ' इति कात्यायनः । एतावाचार्यौ स्वतन्त्रमेव पर्वाधानं विधत्तः । बौधायनस्तु पर्वनक्षत्राधानं विधत्ते । आश्वलायनस्तु—ऋतुपर्वाधानं विधत्ते—' वसन्ते पर्वणि ब्राह्मण आदधीत ' (आश्व.श्रौ.२।१।१३) इति । एतेनर्तुनक्षत्राधानं पर्वाधानं पर्वनक्षत्राधानं केवलमृत्वाधानमिति चतस्रो विधाः सौम्य इति । तत्र नक्षत्रपक्षे शुक्लपक्षः श्रेयान् ।

' क्षौमे वसानावग्निमादधीयाताम् ' ।

'गुणस्य तु विधानत्वात्पत्न्या द्वितीयशब्दः स्यात्' ( जै. सू. ६।१।५) ।

सूत्रार्थः—गुणस्य—क्षौमरूपगुणस्य विधानत्वाद्विधेयकोटिप्रविष्टत्वात् । द्वितीयशब्दो द्विवचनप्रापकः शब्दः—प्रत्ययः पत्न्या एव वाचकः स्यात् ।

' क्षौमे वसानौ जायापती अग्निमादधीयाताम् ' (आप.श्रौ.५।४।१०) ।

आधानं प्रकृत्य क्षौमे वसानावग्निमादधीयातामिति श्रुतम् । तत्र संशयः-किमाधानं द्वौ पुमांसौ सस्त्रीकौ सह कुर्यातामुतैक इति । तत्र—

पूर्वत्राऽऽख्यातसंख्यायाः कर्तृरूपान्वयः स्थितः ।
तेनेह कर्तृरूपस्य भेदो द्विवचनाद्भवेत् ॥
वसानाविति चौकारात्पुंद्वयं संप्रतीयते ।
द्वित्वपुंस्त्वे हि तद्वाच्ये नियम्येते च ते मिथः (शा.दी.६।१।५) ।

यद्यपि पुंद्वयवत्स्त्रीपुंसयोरपि द्विवचनमौकारान्तं दृष्टं कुक्कुटश्च कुक्कुटी च कुक्कुटाविति तथाऽप्युभयाव्यभिचारात्पुंस्त्वं द्वित्वं चास्याभिधेयम् । तयोश्चाभिधेययोरसति स्त्रीसद्वितीयप्रमाणे परस्परनियमात्पुमांसावेव द्वौ गम्येते । तयोश्चोत्पत्त्यावप्राप्तेस्तद्विधानार्थमेवेदं वचनम् । उत्पत्तिवाक्यस्य त्वाधानविधिपरत्वेनार्थवत्त्वादेकवचनं निर्देशमात्रार्थं भविष्यति । क्षौमशब्दश्च ' टुक्षु शब्दे ' इत्यस्माद्धातोरुत्पन्नः शब्दवत्त्वादनुवादः। मलिनत्वेन क्षौमसादृश्याद्वा गौणः । तस्माद्द्वौ पुमांसौ । एवं चात्यन्तसंनिकृष्टार्थविधानाच्छ्रुत्यनुग्रहः । क्षौमवसानसंबन्धविधानेऽत्यन्तमनुपपन्नं वाक्यं स्यादिति प्राप्तेऽभिधीयते । एक एवाऽऽदधीतेति सिद्धान्तः । कुतः ।

क्षौमशब्दो न मुख्यः सन्मुख्यमर्थं परित्यजेत् ।
नापि धात्वर्थयोगेन वर्तते रूढिसंभवात् ॥
वसानक्षौमशब्दौ च तव स्यातामनर्थकौ ।
द्वित्वमात्रविधायित्वात्तस्मात्क्षौमं विधीयते ॥
तद्विधाने च पुंद्वित्वं विधातुं नैव शक्यते ।
उत्पत्तिवाक्यादन्यत्र नानेकार्थविधिर्यतः ॥
संनिकर्षश्च शब्दस्य धर्मो न तदनुग्रहात् ।
प्रधानभूतशब्दार्थपरित्यागोऽवकल्पते ॥
कर्तृरूपस्य चैक्येऽपि तदधिष्ठानभेदतः ।
युक्तं द्विवचनं यद्वदग्नीषोमौ हि देवते ॥
अप्राप्तत्वात्तु वसने यदा क्षौमं विधीयते ।
वसानावादधीयातामित्येतावनुवादकौ ॥
अनुवादो यथाप्राप्तिः सा च स्त्रीपुंसयोर्द्वयोः ।
तेन प्राप्तिवशाच्छब्दाविमौ तावेव वक्ष्यतः ॥
एक एव पुमांस्तस्मादादधीत सह स्त्रिया ।
उत्पत्तिवाक्ये ह्येकत्वमुपादेयं विवक्षितम् ॥

एतेन जायापती आदधीतेतिवचनेन स्वातन्त्र्येण स्त्रिया अनधिकारो वैदिककर्मणीति निश्चितम् । आपस्तम्बसूत्रे इममेव विचारं पुरस्कृत्य ' जायापती ' इति सूत्रितम् । ते जायापतीभ्यां धृते वाससी क्षौमे अध्वर्यवे देये । ' ते दक्षिणाकालेऽध्वर्यवे दत्तः ' ( आप. श्रौ. ५ । ४ । ११ ) ।

अथ वपनविचारः ।

' केशश्मश्रु वपते ' ( तै. सं. ३ । १ । १ ) । ' याजमानास्तु तत्प्रधानत्वात्कर्मवत् ' ( जै. सू. ३ । ८ । ४ ) । ' केशश्मश्रु वपते ' ( आप. श्रौ. ५ । ४ । ९ ) । जैमिनिसूत्रस्यायमर्थः—यजमानप्रधानत्वाद्वपनादिसंस्कारा याजमानाः कर्मवत् । यथा प्रधानकर्माणि पुरुषार्थानि यजमानस्य भवन्ति, एवं वपनादि ।

अत्र मीमांसा—पुरुषसंस्काराः केशश्मश्रुवपनादयः किमाध्वर्यवा उत याजमाना एवेति । समाख्यानादाध्वर्यवत्वे प्राप्ते ब्रूमः । संस्काराः संस्कृत्य कार्ययोग्यतामाधातुं क्रियन्ते न कश्चिद्योग्यताजननार्थं कर्तारं परिक्रीणीते । स्वयमेव योग्यत्वात्स तस्य कार्यं प्रति गुणभावेन परिक्रीणीते । तेन गुणतयैव परिक्रीतानां कर्तॄणां प्राप्तेर्यथाप्राप्तानामेव च समाख्यया व्यवस्थानाद्यत्रैव पुरुषाणां गुणभावस्तत्रैव समाख्यानियमः। संस्कारास्तु याजमाना वचनादृत्विजामपि भवन्ति हिरण्यमालिन ऋत्विज इतिवत् ।

तत्र वपनं विधाय वपनसाधनं विधत्ते—' लोहितायसेन निवर्तयते ' ( तै. ब्रा. १ । ५ । ६ ) ।

भाष्यम्—अयसा निर्मितः क्षुर आयसः । स च लोहितस्ताम्रमिश्रेणायसा निर्मितत्वात् । साधनं विधाय क्रमं विधत्ते—'उपपक्षावग्रे । अथ श्मश्रूणि । अथ केशान् ' । अयं दैवः क्रमः । ' श्मश्रूण्यग्रे । अथोपपक्षौ ' । अयं मानुषः क्रमः । इमावेव क्रमौ श्रौतौ । इत एवाऽऽकृष्य स्मृतिकारैः पुरुषार्थतया विहितं क्षौरमनेनैव क्रमेण कार्यं नाऽऽसुरक्रमेण । अयं ह्यासुरक्रमः—' केशानग्रे । अथ श्मश्रूणि । अथोपपक्षौ ' । एते सर्वे पक्षास्तैत्तिरीयब्राह्मणे ( १ । ५ । ६ ) इत्यत्र श्रुताः । स्मर्यते च कर्मनिष्ठेन भगवता वसिष्ठेन पुरुषार्थतया क्षौरकालनियमः—

मासि मासि गृहस्थस्य पक्षे पक्षे तु यज्वनाम् ।
ऋतावृतौ यतीनां तु वर्षेऽब्दं ब्रह्मचारिणाम् ॥ [ इति ] ।

अत्र मासि मासि गृहस्थस्येत्यनेन न हि यज्ञाद्यो विना गृहस्थस्य स्थितिः संभवति तथाऽपि द्विधुरवामयस्याग्न्याश्रमारंभितपरतया बोध्यम् । अथवा यज्वनां

गृहस्थस्य गृहस्थानां [इति]वचनव्यत्यासेन पक्षे पक्षे मासि मासि वेति विकल्प्यते। अत्र प्रमाणम्—'केशश्मश्रु वपते वाऽशिखम्' (२।१।९) इति कात्यायनसूत्रात्। अत्र कर्काचार्यः—पौर्णमासे वपनस्य विकल्पो नास्ति। तस्मादमावास्यायामस्तीति सिद्धम्। अतो वचनव्यत्यासं कृत्वैवोक्त एव स्मृतेरर्थो मान्यः। देवयाज्ञिकास्तु कर्कमते वपनस्य विकल्पमाहुः। भर्तृयज्ञमते वपनं नियमेनाशिखं वा सशिखं वेति विकल्पः। मानवे विशेषः—'केशश्मश्रु वापयते दक्षिणोपक्रमात्केशान्तव्योपक्रमान्नखानध्यात्मकं कनिष्ठिकातः कारयते। न कक्षौ पत्नी नखांश्च कारयीत' इति। आचार्यमतं पुनरावर्तते—

'पर्वणि च केशश्मश्रु वापयते' (आप. श्रौ. ४।१।४)।

ऐच्छिकत्वाद्वापनस्य पर्वणि पाक्षिकं संनियम्यते वापयत एव पर्वणीति। अत्र धूर्तस्वामिनः—अर्थप्राप्तत्वाद्वपनस्य यदि विद्यते ततोऽस्मिन्काले नियम्यते। प्रवृत्तस्य वपनस्य कालविधिपरत्वाद्वचनस्यार्थान्तराभावादिच्छाप्राप्तस्य वपनस्य कालमात्रनियमविधिः। उत्तरत्रापि (४।१।५) इत्यत्राल्पश इति वचनात्। यदि वर्धिष्ठाः केशा विद्यन्त इच्छा च विद्यते ततोऽस्मिन्काले नियमः। अपर्वणि काले कर्मण्यप्रवृत्तमपि, इच्छायां सत्यां कुर्यादिति। केचित्प्रकरणादेव कर्माङ्गत्वे सिद्धे पर्वग्रहणात्कर्मणोऽनङ्गमिति। अन्ये स्वपर्वकालेऽपि दर्शपूर्णमासप्रवृत्तौ कर्तव्यमित्याहुः। 'यज्ञियो भूत्वा मेधमुपैति' (तै.ब्रा.१।६।५) इति लिङ्गात्। केशवस्वामिमते तु—लोमनखवपनप्राप्त्यर्थश्चकार इति। स्वमते तु—केशश्मश्रुग्रहणं समानदेशस्य नखस्यापि प्रदर्शनमप्यल्पशोऽल्पान्यपि रोमाणि वापयीत। वाजसनेयिमतात्तु—" अप्यल्पशो लोमानि वापयते' (आप. श्रौ. ४।१।५) इति।

अस्यार्थः—अल्पशः केशान्वापयते, अल्पशो लोमानि वापयेदपिशब्दः श्मश्रुग्रहणार्थ इति सूत्रयोजनेति। अस्मिन्नपि पक्षे प्रतिपूर्णमासमेव वपनं न दर्शे।

अत्र रुद्रदत्तः—केशश्मश्रुषु च मध्ये श्मश्रु स्वल्पमपि वापयत एव। 'केशास्स्वल्पे सन्तो नोप्येरन्' इति। बोधायनस्त्वाह—यदि केवलं श्मश्रु वापयिष्यमाणः स्यादिति।

तदयं निष्कर्षः—पुरुषार्थतया विहितं वपनमैच्छिकम्। इष्टिप्रकरणे सूत्रितं वपनमङ्गमनङ्गमिति। तत्रापि पौर्णमासे वपनं नित्यं, दर्शे तु विकल्पः। प्रकृत आधानाङ्गभूतं वपनं तु कार्यमेव। विशेषविधानात्। इति वपनविचारः।

अथाजस्रमीमांसा ।

' आधानाद्द्वादशरात्रमजस्राः ' ( आश्व. श्रौ. २ । १ । ३५ ) ।

' द्वादशाहमजस्रेष्वग्निषु यजमानः स्वयमग्निहोत्रं जुहुयात् ' ( आप. श्रौ. ५ । २२ । १३ ) ।

' द्वादशरात्रं त्र्यहरात्रं त्रिरात्रमन्ततः ' ( कातीये ४ । १० । १६ ) ।

' अजस्रा अस्यैते अग्नयो भवन्ति ' ( बौधा. ) ।

एतेषु सूत्रेषु विचारितेषु भाष्यकारवृत्तिकारप्रयोगकारीयमतेषु मीमांसितेष्वेतन्निरूप्यते—

१ 'अग्निहोत्रपूर्वाधान एव अजस्रपक्षः' । तत्र प्रमाणम्—'आधानाद्द्वादशरात्रमजस्राः ' (आश्व. श्रौ. २ । १ । ३५) । भगवताऽऽश्वलायनाचार्येणाऽऽधानानन्तरमग्निहोत्रस्यैवोच्यमानत्वादनुष्ठानक्रमेणैव कर्मणां व्याख्यानमित्युक्तत्वाच्च ।

२ ' इष्टिपूर्वे अजस्रधारणं नास्ति ' । प्रमाणम्—अन्यमाहवनीयं प्रणीयाग्नीन्न्वादधाति ' ( आप. श्रौ. १ । १ । २ ) । इष्ट्यर्थंतथाऽन्यस्य प्रणयनस्य विधानात् ' अपवृज्य श्वोभूते पौर्णमासेन यजेत ' ( आप. श्रौ. ५ । २४ । ९ ) इत्यपवर्जनविधानाच्च ।

३ ' सोमपूर्वाधानेऽप्यजस्रधारणं नास्ति ' । प्रमाणम्—तस्मात् ' दीक्षितो द्वादशाहं भृतिं वन्वीत ' ( आप. श्रौ. १० । १८ । ४ ) इति । प्रकृतौ द्वादशदीक्षानियमादुपसद्भिः सुत्यया च सह षोडशाहानि प्रकृतेः कालः । अजस्रधारणं तु द्वादशाहपरिच्छिन्नम् । सोममध्ये विहरणस्य वा संभवः । दीक्षणीयासंस्कृतेष्वग्निषु सोमयागविधानात् । अत इष्टिपूर्वे सोमपूर्वे चाजस्रधारणं नास्तीति सिद्धम् ।

अग्निहोत्रपूर्वाधानेऽपि यदाऽर्वागिष्टिकालाद्द्वादशाहानि न पूर्यन्ते तदा कथं तत्रैति पक्षाः—अजस्रेष्विष्टिकरणम् । इष्टिलोपः । यथासंभवमजस्रधारणम् । अजस्रलोप इति । तत्र यथासंभवमजस्रधारणपक्षो दुराश्रयः । तथाविध्यभावाद्द्वादशाहकालविशिष्ट एवासौ विधिः श्रूयते नान्यकालविशिष्ट इति । तथेष्टिलोपपक्षोऽपि न संभवति । अग्निमत्तायां सिद्धायां पौर्णमासकाल आगते तदनारम्भे प्रमाणाभावादक्रियायां प्रायश्चित्तोपदेशाच्च । एवं चेदजस्रेष्वेव पौर्णमासो भवतु । को दोषः । स्वार्थं एव प्रणीतेऽन्वाधानदर्शनादपवर्जनविधानाच्चेति । नन्वग्निहोत्रमपि स्वार्थं एव प्रणीत आहवनीये भवति । ' अर्धायाथ्यार्थाग्निं प्रणयति ' इत्यस्याविशिष्टत्वात् । सत्यविशिष्टं, तथाऽप्याधानानन्तरं धारणविधेः प्रवृत्तत्वात्तदवस्थेष्वेवाग्निहोत्राधिकारस्य प्राप्तस्य त्यागे प्रमाणाभावा-

नेष्वेवाग्निहोत्रहोमो युक्तः। एतमेव न्यायमनुसृत्योक्तं भगवताऽऽपस्तम्बेन ‘ द्वादशाहमजस्रेष्वग्निषु यजमानः स्वयमग्निहोत्रं जुहुयात् ’ इति। तथा प्रणीते वेदग्निहोत्रकाल एतस्मिन्नेवाग्निहोत्रं जुहुयात्। एवमन्यत्र विप्रकान्ते तन्त्र इत्याग्निहोत्रस्यान्यार्थेष्वपि प्रवृत्तिदर्शनान्नानात्वं दोष इति गम्यते। अतोऽग्निहोत्रस्यान्यार्थेष्वपि प्रवृत्तिदर्शनादाधानानन्तरमग्निहोत्रस्यानन्यार्थाहवनीयासंभवादजस्रेष्वेवाग्निहोत्रहोमो न विरुध्यते। पौर्णमास्याः पुनर्द्वादशाहोत्तरकालवर्तिन्याः स्वार्थाहवनीयासंभवादजस्रेष्वेतस्याः प्रवृत्तिर्विरुध्यते। अतोऽजस्रेष्विष्टिकरणमित्ययमपि पक्षो न संभवति। नन्वजस्रलोपपक्षेऽप्याधानात् ‘ द्वादशरात्रमजस्राः ’ इति नित्यवदाम्नानं विरुध्यते। न विरुध्यतेऽस्य नित्यत्वासंभवात्। उक्तं हि—‘ इष्टिपूर्वं सोमपूर्वं वा प्रवृत्तिकरणम् ’ इति। तस्मादस्य विध्यन्तरानुपरोधेन प्रवृत्तिदर्शनादकरणे च प्रायश्चित्ताम्नानात्। अस्मिन्विषयेऽजस्रलोप एव श्रेयानिति वक्तुं युक्तम्। अत्र वयम्—केचिदाधानाद्द्वादशरात्रमजस्रा इति वचनादिष्टिपूर्वसोमपूर्वाधाने च यथासंभवमजस्रधारणमिच्छन्ति। तत्तु नभद्राजाद्यम्। कथमजस्रधारणं कदा कथं वेति चिन्तायामाधानात्त्रो(त्तो)मपूर्वाधान इत्युक्तम्। अन्यत्र तु सूत्रान्तरेणैव व्यवस्थाऽभ्युपेतव्या। सा च वृत्तिकृता कृतैव साधीयसीत्युत्पश्यामः। अत्र कात्यायनवचनात्पौर्णमास्याधानेऽपि यद्वरात्रं त्रिरात्रमन्तत इतिसूत्रादजस्रधारणं केचिदिच्छन्ति। गतश्रीणां नित्यमजस्रधारणं सूचितम्। ‘अत्यन्तं तु गतश्रियः’ (आश्व. श्रौ. ९। १। ३५) इति।

अगतश्रियोऽपि केचिदजस्रधारणमनुतिष्ठन्ति ते सूत्रविरोधादुपेक्ष्याः। बौधायनसूत्राध्यायिनां तु द्वैधसूत्रादजस्रधारणे विकल्पः। आपस्तम्बसूत्राध्यायिनां तु यदि मथित्वाऽऽहितः स्याद्दक्षिणाग्निस्तर्हि तस्याजस्रधारणं युक्तम्। आहवनीयस्य दक्षिणाग्नेर्नास्त्यजस्रधारणम्। गार्हपत्यस्य त्वजस्रधारणं नित्यम्। नित्यं गार्हपत्यमित्यापस्तम्बसूत्रात्। सत्याषाढीयानां त्वाहवनीयेऽपि दक्षिणाग्निर्नित्यः।

इत्यजस्रविचारः।

एवंसर्वं मनसि निधाय मीमांसकशिरोमणिनाऽध्वजायनसूत्रवृत्तिकृता गार्ग्यनारायणेन व्याख्यातं तदिदं मीमांसामतमुदाहरामः—

‘ द्वादश तु रात्रीष्वनुनिर्वपेत् ’ ( वे. ब्रा. १। १। ९ )।

‘ संस्कारे कर्म संस्कृतानां तदर्थत्वात् ’ ( जै. सू. ५। ३। २१ )।

संस्कृतेषु संस्कारे क्रमयोजनादिभिः संस्कृतेष्वग्निषु कर्माणि वर्तेरन्। कुतः। संस्कृतानां तदर्थत्वात्। संस्कारशब्दा एत आहवनीयादयः। संस्कारस्य कस्यचिदभावे नाऽऽहवनीयादिषु कर्म स्यात्।

'द्वादशाहे पवमानहवींषि निर्वपेत्' (आ. श्रौ. ५।२१।२)।

मीमांसा—आधानप्रकरणे पवमानहवींषि विहितानि तान्याधानादिप्रकृष्यन्ते। द्वादशरात्रीष्वनुनिर्वपेदित्यादिभिस्तत्राग्निहोत्रादीनि किमाधानानन्तरमेव प्रवर्तन्त उत तेषु कृतेष्विति विचारे कर्तव्यान्याहवनीयस्य निष्पन्नत्वात्। आधानमात्रस्य निरपेक्षस्य तदुत्पादकत्वात्पवमानहविर्भिस्तु निष्पन्नस्याऽऽहवनीयादयो निष्पन्नाः। निष्पन्नेषु तेषु भवितव्यं कर्मभिरिति प्राप्त उच्यते—न निरपेक्षमाधानमग्नीनामुत्पादकम्। पवमानहविषामपि तदुत्पादकत्वात्। न च विकल्पस्तेषामाधानोत्तरकाले विधानात्। अतः समुच्चितानां तदुत्पादकत्वाच्च तेभ्यः प्रागाहवनीयानिवृत्तिः। यद्यप्याधानाङ्गं पवमानहवींषि तदाऽप्यनङ्गेन प्रधानेन साध्यानिष्पत्तेस्तदुत्तरकालमेवाग्निनिष्पत्तिः। यत्तूक्तं निष्पन्नस्यैवाग्नेः संस्कारमात्रं हविर्भिरिति, तथाऽप्यस्य संस्कारस्याऽऽहवनीयकार्योपयोगित्वात्तेन विना निष्पन्नस्याप्यग्नेरग्निहोत्रादिकार्याक्षमत्वात्तदुत्तरकालैव कर्मणां प्रवृत्तिः। अत्र भाष्यकारवार्तिककारमते पूर्णाहुत्यन्तमाधानम्। एतत्तु सोमनाथीये बृहस्पतिवाजपेयदृष्टान्तेनोद्धारि। पार्थसारथिमिश्रा अपि यदाऽप्याधानाङ्गं पवमानहवींषि शास्त्रदीपिकायामुद्घोषयांबभूवुः। एवमङ्गमनङ्गमिति पक्षद्वयं, तथाऽपि पवमानहविर्निर्वापः सद्योऽथवा द्वादशाहे त्र्यहे त्र्यहे चतुरहेऽर्धमासे मास्यृतौ संवत्सरे वा, इत्यापस्तम्बसूत्रे (५।२१।१-२)। द्वादशरात्रिष्वनुनिर्वपेदिति तै० ब्राह्मणम्। एतेषु त्रिषु पक्षेषु यदा यदा वा कार्यं इति तु सर्ववादिसंमतम्। तं निर्वापं विनाऽग्निहोत्राद्यनुष्ठानं न भवतीति तु सामञ्जस्यम्। 'आधानाद्द्वादशरात्रमजस्राः' (आश्व. श्रौ. २।१।१५)। अत्राऽऽधानविधिश्रोक्तत्वाऽऽधानादूर्ध्वं द्वादशरात्रमजस्रा इत्युक्तम्। तस्यायमभिप्रायः—यावता कर्मसमुदायेनाग्नीनां सिद्धिर्भवतीति।

---

## अथाग्नेः सगुणत्वविचारः।

'अग्नये पवमानायाग्नये पावकायाग्नये शुचये' इति।

'अवचने च गुणशास्त्रमनर्थकं स्यात्' (जै० सू० १०।४।२८)।

सूत्रार्थः—यदि च गुणाभिधानं न क्रियते गुणशास्त्रमनर्थकं स्यात्।

'अग्नये पवमानायाग्नये पावकायाग्नये शुचय इति' (आप. श्रौ. ५।२१।५)।

अत्र मीमांसा—तत्र संशयः—तद्धावितु निगमेषु किमेक एवाग्निशब्दो वक्तव्यः किमुभौ शब्दौ वक्तव्यौ, अग्नये पवमानाय निर्वपाम्यग्निं पवमानमावहाग्नेः पवमानस्याहमुज्जितिमनूज्जेषमिति । तत्रैकेनार्थनिर्देशात्तिस्रेर्नोच्चारणं द्वयोः । न चाग्निशब्द एवैकश्चोदकानुग्रहो भवेत् । स्यादेवं यदि प्रथममर्थं विधाय पश्चाच्छब्दाश्रयणं स्याच्छब्द एव तु भावनाङ्गत्वेन विधीयत इत्युक्तम् । तस्मादुभयोर्विधानादुभौ वक्तव्यौ । [ इत्यग्नेः सगुणत्वविचारः ] ।

---

## अथाऽऽर्त्विज्यविचारः ।

' ब्राह्मणानामिदꣳ हविः । नेहाब्राह्मणस्यास्ति ' ( तै.ब्रा. ३।७।५ ) ।

' स्मृतेर्वा स्याद्ब्राह्मणानाम् ' ( जै० सू० १२।१।४३ ) ।

याजनाध्यापनप्रतिग्रहाः स्मृत्या ब्राह्मणानामेव विहिताः ।

' ब्राह्मणानृत्विजो वृणीते ' ( आप. श्रौ. १०।१०।१ ) ।

अत्र मीमांसा—आधानप्रभृतिषु कर्मसु किं त्रिभिरपि द्विजातिभिरार्त्विज्यं कारयितव्यमुत ब्राह्मणैरेवेति संशयः । तत्र ' त्रयोऽप्यार्त्विज्यमर्हन्ति विद्यस्यात्स्मारणं पुनः । पुरुषार्थमतः कर्मवैगुण्यं नास्ति किंचन ' । याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपाया इति नियमः पुरुषार्थतया स्मर्यते न क्रत्वर्थतया । तेन क्षत्रियवैश्यावार्त्विज्यं कुर्वन्तौ नियमातिक्रमात्कामं स्वधर्मात्प्रच्यवेयातां, न तु क्रतोः काचिद्गुणहानिः । तस्मात्त्रिभिरप्यार्त्विज्यं कारयितव्यमिति प्राप्तेऽभिधीयते—' द्विजोत्तमानामार्त्विज्यं न तु क्षत्रियवैश्ययोः । ब्राह्मणार्त्विज्यनियमः क्रत्वर्थेनापि हि स्मृतः ' । पक्षं व्याख्यास्याम इत्युपक्रम्य ब्राह्मणानामार्त्विज्यमिति स्मरन्तो यज्ञसूत्रकाराः क्रत्वर्थेन स्मरन्तीति विस्पष्टमेतत् । तथा च भगवद्रामायणेऽपि—' क्षत्रियो याज्ञिको यस्य चाण्डालस्य विशेषतः । कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ' इति । सुरा देवा ऋषयश्च ऋत्विग्भूता इति देवताहविर्भागनिराकरणात्क्रतुवैगुण्यमेव दर्शितम् । ' राजयाजकयाज्यस्य विनश्यति यथा हविः ' इति चाब्राह्मणार्त्विज्ये हविर्नाशश्च स्मृतः । लिङ्गानि च दर्शितानि—ब्राह्मणानामिदं हविरित्येवमादीनि । तस्माद्ब्राह्मणानामेवाऽऽर्त्विज्यमिति सिद्धम् । तथा च भगवानाश्वलायनाचार्यः—

' अन्तेवासी वा ' ( आश्व. श्रौ. २ । ४ । ४ ) ।

अत्र वृत्तिः—ऋत्विजस्त्रिविधा देवभूताः पितृभूता मनुष्यभूता इति । ये कर्मणि कर्मणि क्रियन्ते ते देवभूताः । येऽन्वयागता ऋत्विजस्ते पितृभूताः । ये

विकस्य पुरुषस्य सर्वाणि कर्माणि कर्तुं त्रिपन्ते ते मनुष्यभूता: । तत्र यस्याऽऽहि- ताग्नेः पितृभूता मनुष्यभूता वा ऋत्विजः सन्ति तेषामृत्विजामेकः कश्चित्सर्वव- र्जितेषु कालेषु जुहुयात् । यस्य देवभूतास्तस्यान्तेवास्येवेति विनिवेशः । स एव सूत्रेऽभ्याह—

' ऋत्विजो वृणीतेऽन्यूनानातिरिक्ताङ्गान्वे मातृतः पितृतश्चेति ।
पूर्व ऋत्विजो वृणीत इत्येके ' ।

वरणक्रमोऽपि तत्रैव—' ब्रह्माणमेव प्रथमं वृणीतेऽथ होतारमथाध्वर्युम् । अथोद्गातारम् ' ।

प्रथमाधाने तु यत्सूत्रं गृहीतं स्यात्तत्सूत्राध्यायिनैवारम्भिदाम कार्यम् । यथा- ध्वर्योः सकाशात् । तथा चाऽऽचार्यसूत्रम्—

' यजमानाय प्रयच्छति ' ( ५ । ८ । ७ ) इत्यापस्तम्बः । अध्वर्युश्च यजुर्वेदविहितानां पदार्थानां कर्ता, इति समाख्यावशादयमर्थो लभ्यः । यथा ' ऋग्वेदेन होता ' इत्यादिस्थलेषु सर्वत्रैवमेव । न च समाख्यायाः किंचि- द्बाधकं पश्यामः । इत्यार्त्विज्यविचारः ।

---

## अथाजबन्धनविचारः ।

उत्तरेण गार्हपत्यायतनं कल्माषमजं बध्नाति' (आप. श्रौ. ५।८।१७) ।

कल्माषः कृष्णबिन्दुः । अस्याजस्य प्रतिपत्तिरग्नीधे दक्षिणादानम् । सूत्रि- चाऽऽचार्येण—' अजं पूर्णपात्रमुपबर्हणं तार्वसूत्रमित्यग्नीधे ' ( ५ । १० । ७ ) । कात्यायनेन तु विकल्पेनाजबन्धनं सूत्रितम्—' गार्हपत्यागारेऽजं बध्नाति न वा ' ( का. श्रौ. ४ । ८ । १ ) । यदा बध्यते तदा प्रतिपत्तिरपि पूर्ववदेव सूचिता । यथा—विद्यमानं प्रातरग्नीधे दद्यात् । इत्यजबन्धनविचारः ।

## अथ विहारप्रक्रमादिविचारः ।

'द्वादशसु विक्रामेष्वग्निमादधीत । चक्षुर्निमित आदधीत' [ तै.ब्रा. १।१।४] ।

भाष्यम्—विक्रामः प्रक्रमः । स च द्विपदः । तथा च ' प्रक्रमो द्विपदस्त्रिपदो वा ' । गार्हपत्याद्द्वादशसु विक्रामेषु समाप्तेष्वाहवनीयायतनं कृत्वा तत्राग्निमाद- ध्यात् । चक्षुषा दृष्ट्वा प्रायेणैतावान्देशो द्वादशविक्रामः संभवतीति निश्चित्य तत्राऽऽदधीत । सर्वं चेदं सूचितं शुल्बसूत्र आपस्तम्बाचार्येण । भाषितं च सायकरविन्देन ।

'आग्न्याधेयिके विहारे गार्हपत्याहवनीययोरन्तराले विज्ञायते' (शु. सू. २ । १ ) ।

अत्र भाष्यम्—अग्नय आधीयन्ते यस्मिन्कर्मणि तदग्न्याधेयम् । तत्राव आग्न्याधेयिकः । विह्रियन्तेऽस्मिन्नग्नय इति विहारो देवयजनदेशः । तमधिकृत्य गार्हपत्याहवनीययोरन्तराले । गार्हपत्याहवनीयशब्दाभ्यां तदायतने लक्षणा । अन्तरालश्रुतिसामर्थ्यादन्तरालेऽन्तरालं प्रस्तुत्य विज्ञायते श्रूयते सर्वत्रात्यायमेवार्थः । गार्हपत्याहवनीयग्रहणात्तयोरेवान्तराले श्रुतिरेवं पठ्यते न कात्यायनसत्याषाढावप्यमुमेवार्थं सूत्रयन्ति(तः)। बौधायनस्तु यथाब्राह्मणम् । परं चात्र प्रक्रमशब्दार्थो नाधिगतः । तदर्थमयमुपक्रमः—'प्रक्रमो द्विपदस्त्रिपदो वा' (२।२) इत्यापस्तम्बाचार्यशुल्बसूत्रम् । पदप्रमाणं करविन्दभाष्ये—पञ्चदशाङ्गुलं प्रक्रमः पदविक्षेपवाची । पदादयो मानसाधनतया गृह्यन्ते । अतो न विक्षेपमात्रेण प्रयोजनम्, किंतु तत्संबन्धिना केनचिद्द्रव्येण । अतो विक्षेपफलभूतसंयोगविभागाभ्यामुपलक्षिते देशान्तरालपरिमितरज्ज्वादिना प्रयोजनं गच्छन्ति सर्वो जन एकप्रक्रमस्य पदं भूमौ स्थापयित्वाऽन्यत्पदं विक्षिप्य निदधाति । निर्विकारं संगच्छन्समः पुरुषस्थितनिधीयमानयोः पदयोरन्तरालं यथा पदपरिमितं भवति तथा गच्छति । अतो विक्षिप्तेन पदेन पदद्वयं व्याप्तमिति द्विपदः प्रक्रमः । यद्यपि त्रिपदो वेत्याचार्यसूत्रे श्रुतं तथाऽपि तत्र व्यवस्थैवम्—'पञ्चारत्नि(त्निः)पुरुषो दशपदो द्वादशाङ्गुलं पदं प्रक्रमस्त्रिपदसमविभक्तस्य' (१६।८।२१) इति कात्यायनश्रौतसूत्रम् । अत्र कर्कभाष्यम्—पञ्चारत्नयो यस्य सः । पञ्चभिररत्निभिः पुरुषः । दशभिः पदैः पुरुषः । द्वादशभिरङ्गुलैः पदमित्येवमर्थो न भवति । इतः प्रागरत्न्यादीनां लक्षणस्यानुक्तत्वेनासिद्धत्वात् । अथ चैवम्—पुरुषस्य समविभक्तस्य यः पञ्चमो भागः सोऽरत्निः । तस्य दशमो भागः पदम् । पदस्य द्वादशो भागोऽङ्गुलम् । त्रिभिः पदैरेकः प्रक्रम इति । अत्र युक्तम्—प्रक्रमस्याष्टात्रिंशत्यादिना संख्योक्ता श्रौतसूत्रे न प्रक्रमस्य प्रमाणमुक्तम् । अतः प्रक्रमस्त्रिपद इत्यग्नौ पठितत्वात्त्रिपद एवास्तु सर्वत्र । नैवम् । अग्निचित्प्रकरणे पठितत्वात्तस्यैवाङ्गं त्रिपदः प्रक्रमः । आधानसोमयोः प्रत्यक्षवचनाभावाद्यौगिकः प्रक्रमो ग्राह्यः । योगस्तु—'क्रमु पादविक्षेपे' । प्रक्रमणं क्रमः । क्रमणेनारत्निमात्रः प्रक्रमो भवति । 'तस्मात्प्राङ् प्रक्रामति श्रीकामान्' ( १ । ५ । १ । १ ) । अरत्निस्तु पुरुषपञ्चमांशस्तस्मादाधाने द्विपदः प्रक्रम इति सिद्धम् ।

पञ्चदशाङ्गुलं पदमुत्तमः पक्षः । द्वादशाङ्गुलं मध्यमः । दशाङ्गुलं पदं क्षुद्रमिति प्रयोक्तारः । तत्र व्यवस्था—पञ्चदशाङ्गुलं पदमापस्तम्बसूत्रानुयायिनाम् । द्वादशाङ्गुलं कात्यायनीयानाम् । अन्येषां विकल्प इति । आयतनानि—तस्मात्प्राचीनमष्टासु प्रक्रमेषु ब्राह्मणस्याऽऽहवनीयायतनम् । एकादशसु राजन्यः-(स्य) । द्वादशसु वैश्यस्य । दक्षिणतः पुरस्ताद्वितृतीयदेशे गार्हपत्यस्य नेदीयसि दक्षिणाग्नेरायतनम् । अन्यदाहवनीयागारमन्वग्गार्हपत्यस्य ।

'अग्रेणाऽऽहवनीयं सभायां सभ्यः । तं पूर्वेणाऽऽवसथ आवसथ्यः' (आ. श्रौ. ५ । ४ । ३ । ५ । ६ । ७ । ८)।

वृत्तिः—अष्टासु प्रक्रमेष्वतीतेष्वाहवनीयस्थानम् । एवं सर्वत्र । गार्हपत्यस्य दक्षिणतः पुरस्ताद्गार्हपत्याहवनीययोरन्तरालदेशस्य तृतीयोंऽशो वितृतो यस्माद्देशात्स तथोक्तः । समीपसप्तमी चेयम् । वितृतीयदेशस्य पश्चात्स्तोकान्तरे देश इत्यर्थः । उक्तं च शुल्बसूत्र आचार्येणैव—गार्हपत्याहवनीययोरन्तरालमित्वा-त्रिना । गार्हपत्यागारात्पृथगेवाऽऽहवनीयस्याप्यगारं कर्तव्यमित्यर्थः । तयोरेवाप्यतरत्र दक्षिणाग्न्यायतनम् । सभा द्यूतशाला । तत्र सभ्योऽग्निराधेयस्तस्य चाग्नेस्तस्याऽऽयतनम् ।आवसथः—अतिथीनां वासभूमिः ॥

[ इति विहारक्रमादिविचारः ] ।

अथ साममीमांसा ।

'रथंतरमभिगायते गार्हपत्य आधीयमाने । वामदेव्यमभिगायत उद्ध्रियमाणे । बृहदभिगायत आहवनीय आधीयमाने । यज्ञायज्ञीयमभिगायते । श्यैतेन श्येती कुरुते' ( तै. ब्रा. १ । १ । ८ ) ।

'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' ( जै. सू. ३।३।९ ) ।

सूत्रार्थः—गुणमुख्यव्यतिक्रमे गुणोऽङ्गम् । मुख्यं प्रधानं तयोर्व्यतिक्रमे विरोधे तदर्थत्वात् । प्रधानार्थत्वादङ्गस्य मुख्येन प्रधानेन सहाङ्गस्य वेदसंयोगः संबन्धः ॥

'मथ्यमाने ग्राग्नेः साङ्कृतेः साम गायति । धूमे जाते गाथिनः कौशिकस्य । अरण्योर्निहितो जातवेदा इति च' ( आप. श्रौ. ५ । १० ) ।

'रथंतरे गीयमाने यज्ञायज्ञीये च' (आप. श्रौ. ५ । ११ । ६) ।

'यज्ञायज्ञीये गीयमाने' ( आप. श्रौ. ५ । १२ । ४ ) ।

'बृहति गीयमाने श्यैतवारवन्तीययोर्यज्ञायज्ञीये च' (आप. श्रौ. ५। १५ । ६ ) ।

अत्र मीमांसा—याजुर्वेदिकमाधानं तस्य सामवेदे वारवन्तीयं गायतीत्यङ्गविधिः। अत्र वारवन्तीयस्य किं सामवेदिकः स्वर उत याजुर्वेदिक इति संदेहः। प्रधानविधिनिबन्धनस्य स्वरस्य प्रधानैकवाक्यतापेक्षित्वेन विलम्बितत्वात्स्ववेदनिबन्धन एव स्वरोऽनपेक्षतया शीघ्रं प्रतीयमानो युक्त इति प्राप्ते प्रधानधर्मत्वादुपांशुत्वमेव बलीयः। साङ्गं ह्याधानं विधिना विधीयतेऽतस्तस्यैव याजुर्वेदिकत्वादुपांशुत्वं धर्मः। न चाङ्गस्याक्रियमाणं तत्साङ्गस्य कृतं भवति। तेनाङ्गस्योऽप्यसौ प्रधानधर्म इति विलम्बितप्रतीतिरपि बलीयान्। इतरथा प्रधानस्यैव वैगुण्यापत्तेः। अतोऽङ्गधर्ममुच्चैष्ट्वं बाधित्वा प्रधानधर्म उपांशुत्वं स्यादिति सिद्धान्तितम्। एवं 'अङ्गगुणविरोधे च तादर्थ्यात्' इत्यनेन गतप्रायं स्यात्। न चोदाहरणमपि युक्तम्। वारवन्तीयं गायतीत्यस्याङ्गविधेरपि याजुर्वेदिकत्वादित्यन्यथा व्याख्यानम्। यस्य मन्त्रस्य वेदान्तरे समाम्नानमुत्पत्तिर्वेदान्तरे च विनियोगविधिस्तस्य किमुत्पत्तिवेदनिबन्धनः स्वरोऽथवा विनियोगवेदनिबन्धन इति संशयः। अत्र—उत्पत्तेः पूर्वभावित्वात्तन्निबन्धनं एव हि स्वरः प्रथमभावित्वाद्युक्तो नाप्यो विलम्बितः। नैतदेवम्। न खल्वाम्नानमात्रेण मन्त्रस्य स्यात्प्रयोज्यता। तेन क्रियत इत्येवमतो वक्तुं न शक्यते। तेन तु क्रियते मन्त्रो यत्र वेदे विधीयते। विध्यायत्तं ह्यनुष्ठानं तत्र चापेक्षितः स्वरः'। प्रयोज्यतयाऽवधारितस्य मन्त्रस्य स्वरापेक्षा भवति न स्वरूपावगतिमात्रेण। तस्माद्वारवन्तीयादेः सामवेदेनाक्रियमाणत्वादनपेक्षितत्वाच्च न तन्निबन्धनमुच्चैष्ट्वम्। यजुर्वेदेन तु क्रियमाणत्वात्स्वरापेक्षणाच्च तदीयमुपांशुत्वमेव स्यात्।

अत्र 'भूयस्त्वेनोभयश्रुति' [ जै. सू. ३।३।९] । इत्यत्र कुतूहलवृत्तौ—

वार्तिकरीत्या विनियोगविधिवेदनिबन्धनत्वे तु ज्योतिष्टोमस्य याजुर्वेदिकत्वेऽपि तदङ्गमन्त्रेषु तत्तद्वेदस्वरप्राप्तेस्तस्य याजुर्वेदिकत्वसाधने फलाभावात्सूत्रमिदमन्यत्र बोध्यम्। तद्यथा—आधानमधिकृत्य सामवेदे श्रुतम्—'जातेऽग्नौ रथंतरं गायति' इत्यादि। तथा यजुर्वेदे श्रुतम्—'रथंतरमभिगायते गार्हपत्य आधीयमाने' इत्यादि। तदेतदुभयश्रुति, उभयत्र श्रूयमाणं साम भूयस्त्वेन विधिप्रतीतिपौष्कल्येन हेतुनाऽन्यतरत्र विहितमिति निर्धार्यम्। सामान्यस्वरूपस्याप्रावगमे हि तद्विनियोगविधिर्न संभवति। तत्स्वरूपावगमश्च सामवेद एवेति तत्रैव तद्विधिः। यजुर्वेदे—'रथंतरमभिगायते गार्हपत्य आधीयमाने' इत्यादि

तु सामवेदविहितरथंतरानुवादेन कालान्तरविधिपरमिति न तत्र तद्विधिः। तत-श्चाऽऽधानाङ्गरथंतरादिसामसूच्चैष्ट्वमेव। यस्य तु मन्त्रस्य वेदद्वयेऽपि समाम्नानं विनियोगविधिश्चानन्यथासिद्धस्तत्रागत्या विकल्पः।

'उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामाभिगायति'

इतिश्रुतिवाक्यं शाबरभाष्ये (जै. सू. १०।८।९)। इत्यत्रोदाहृतम्।

'उपवादश्च तद्वत्' (जै. सू १०।८।९)।

सूत्रार्थः—उपवादः—उपवीतेति निन्दा। तद्वत्। ग्रहणाग्रहणवत्।

'ब्रह्माऽग्न्याधेये सामानि गायति' (आप. श्रौ. ४।६।१७)।

मीमांसा—शा. दी. अग्न्याधेये वारवन्त्यादिसामगानं विधाय श्रूयते—'न ब्रह्मा सामानि गायेत्' इति। तत्र संशयः—किमयं प्रतिषेधो नित्यं सामगानमुत प्रतिषेधार्थ-मेवेदं विकल्पः सामगानस्येति। तत्र ब्रह्मणो गानप्राप्त्यभावादनुवादोऽयं निषे-धस्तेन नित्यं गानम्। नैवम्। अनुवादमात्रस्याऽऽनर्थक्यात्। तस्माद्गाननिषेधोऽयम्। ब्रह्मशब्दस्तु ब्राह्मणपरोऽनुवादः। अतो मीमांसकमते गानं विकल्प्यत इति।

सूत्रयामास च च्छन्दोगानामाचार्यो लाट्यायनः—'सर्वत्र ब्रह्मेत्युपक्रम्य ब्रह्मणः कर्मसु प्रक्रान्तेषु यानि वेनमध्वर्युर्ब्रूयात्तानि गायेत्' इति। 'अधिका-रात्तु ब्रह्मणः' 'दृष्टं चानेन सामगानं वाजपेयसौत्रामण्योः' (४।१०।१४)। अनेन सामवेदिनां गृहे ब्रह्मणो वोद्गातुर्वा गानमिति, आधानप्रकरणे प्रपञ्चितं बहुधाऽऽचार्येणाग्निस्वामिमिश्च भाषितम्। भगवानापस्तम्बोऽप्यमुमेवार्थं वैकल्पिकं निराकर्तुं स्वीय आधानसूत्रे 'ब्रह्माग्न्याधेये सामानि गायति' इति सूत्रयांबभूव। अवीवृतच्च तथैव रुद्रदत्तः। कात्ययनोऽपि 'ब्रह्मा वा वेदसंयो-गात्' (४।२।८)। इति सूत्रेण गानं ब्रह्मण एव सूत्रयति। उपबृंहितं चैत-त्सूत्रं 'अग्न्याधेये सौत्रामण्यां च ब्रह्मा सामानि गायति' इति सूत्रान्तर-मुदाहरद्भिस्तत्रभवद्भिः कर्काचार्यैः। कात्यायनोऽपि भूयः—ऋतुनक्षत्रेणेत्यादि-सूत्रेण सामगानस्यैव विकल्पमाह। अनुमेनिरेऽप्यमुमेवार्थं बहवो भाष्यकाराः। अयमत्र निष्कर्षः—आपस्तम्बसूत्रानुसारमनुष्ठातॄणामाधाने ब्रह्मैव साम गायेत्। बौधायनानां तूद्गाता। मीमांसकैस्तु बौधायनो विरुध्यते। अत एव मीमांसा-चार्यो भगवाञ्जैमिनिः—उपवादश्च तद्वदित्यनेन सामगानं विकल्पयांबभूव। अत एव गुरवो याज्ञिकमीमांसकमतविरोधे विकल्प इत्युपदिदिशुः। तमप्यर्थं प्रति-पित्सून्येकेषामिति सूत्रयद्भिराचार्यैर्भङ्ग्यन्तरेण सूचितमिति दृढं विश्वसिमः।

इति साममीमांसा।

## अथ पवमानेष्टिविचारः।

'त्रीणि हवींषि निर्वपति' (तै. ब्रा. १।१।५)।

'न वा तासां तदर्थत्वात्' (जै. सू. ३।६।१२)।

सूत्रार्थः—तासां पवमानादीष्टीनां तदर्थत्वादग्न्यर्थत्वादग्निरिष्ट्यर्थम्। वा पूर्वपक्षव्यावृत्त्यर्थः।

'पवमानहवींषि सद्यो निर्वपेत्' (आप. श्रौ. ५। २२)।

अत्र मीमांसा—आधानं पवमानेष्टयश्च मिथः संनिहिताः समाम्नातास्तत्र किमाधानमिष्ट्यङ्गमुत नेति। तत्र प्रकरणत्वादङ्गत्वम्। ननु फलवत्संनिधावफलं तदङ्गं न चेष्टयः फलवत्यः। आधानं सफलमग्निनिष्पादकतयाऽतो विपरीताङ्गाङ्गित्वम्। सत्यम्। एवं पूर्वपक्षवादी मन्यते—अग्नयोऽतिदेशेनेष्ट्यङ्गमाधानं चाग्निसंस्कारकमवगम्यमानं प्रकरणादिष्ट्यङ्गभूताग्निसंस्कारकतयाऽवघातादिवदिष्ट्यर्थमिष्टीनां तु विश्वजिदादिन्यायेन फलकल्पना भवतीति। सिद्धान्तस्तु फलवदग्निहोत्राद्यर्थत्वादग्नयः फलवन्तस्तदर्थं चाऽऽधानं श्रुतिसंयोगात्। इष्टयोऽपि प्राकरणिकेन वाक्येन फलवदग्न्यङ्गं प्रकरणादाऽऽधानस्यैव फलवतोऽङ्गं विधीयमाना नाकाङ्क्षितफला भवितुमर्हन्ति। विनैव कल्पनया सर्वेषामर्थवत्त्वात्। एतमेव पक्षं 'यदि त्विष्टयस्तनुयः' (२।१।१८) इत्यत्र विस्तरशो व्याचख्युर्वार्तिककाराः। एवं मीमांसकमते। आश्वलायनाचार्यमते सेष्टिकमेवाऽऽधानम्। निर्दिष्टसूत्रमनुसृत्य केचित्पूर्णाहुत्यन्तमाधानमित्यर्थमभिप्रयन्ति। परमत्र यथावसरं दार्शिकादिषु प्रयोगेषु मीमांसामहे। अत्र पवमानहवींषि सद्यो निर्वपेदिति तैत्तिरीयब्राह्मणमतिक्रामति। तैत्तिरीयब्राह्मणे तु—'द्वादशसु रात्रीषु पवमानैर्निर्वपेत्' इति श्रुतम्। बौधायनस्तु—उक्तब्राह्मणं नातिक्रामति। अत एवाऽस्माभिः पक्षविधिश्च सर्वसूत्राण्यालोच्य प्रकटी कुर्महे। इति यावद्विशेषप्रदर्शनं शास्त्रान्तः। इतः परमपि बह्वत्र मीमांसनीयं, परं ग्रन्थविस्तरभियोपरम्यते ॥

इत्याधानमीमांसा।



# अथाऽऽधानपद्धतेः शुद्धिपत्रम् ।

---

## प्रस्तावना ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २५ | पिण्डः | पिण्डं |
| | | आपस्तम्बसूत्रम् । | |
| १ | ११ | दुरिति | दुरितिं |
| ५ | ६ | विमधो | विमृधो |
| १० | ८ | मह्वे | मंदे |
| १२ | २७ | पञ्चमीन | पञ्चमीत |
| | | इष्टिसूत्रम् । | |
| ३२ | २२ | निर्वापाणां | निर्वाप्याणाम् |

समाप्तमिदं शुद्धिपत्रम् ।

---

१ यत्र यत्र दक्षिणादानप्रस्तावे निष्कपरिक्रय्यमित्युल्लेखोऽस्ति तत्र यथाद्रव्यं दान-संकल्प ऊह्यम् । यथा—वत्सतरीनिष्कपरिक्रय्यं ते दास्य इत्यत्र वत्सतरीस्ते दास्य इति । एवं सर्वत्र ।

---